तुरग-नर-मगर-विहग-वालग-किंनर-रूरु-सरभ-चमर-कुञ्जर-वणलय-पउमलयभत्तिचित्तं ○[12]खंम्भुग्गयवइरवेइयापरिगयाभिरामं विं[13]ज्जाहरजमलजुयलजंतजुत्तं पिव अं[14]च्चीसहस्समालणीयं रूं[15]वगसहस्सकलियं भिसमाणं भिब्भिसमाणं चक्खुल्लोयणलेसं सुहफासं सस्सिरीयरूवं [पृ० ७६ पं० २-४] कंचणं[16]मणिरयणथूभियागं णाँ[17]णाविहपञ्चवण्णघण्टापडागपरिमण्डियग्गसिहरं



ऋषभा-वृषभाः तुरग-नर-मकर-विहगाः प्रतीताः व्यालाः-श्वापदभुजगाः किंनरा-व्यन्तरविशेषाः रुरवो-मृगाः सरभाः-आटव्या महाकायाः पशवः चमरा-आटव्या गावः कुञ्जराः-दन्तिनः वनलता-अशोकादिलताः पद्मलताः-पद्मिन्यः एतासां भक्त्या-विच्छित्त्या चित्रम्-आलेखो यत्र तद् ईहामृग-ऋषभ-तुरग-नर-मकर-विहग-व्याल-किन्नर-रुरु-सरभ-चमर-कुञ्जर-वनलता-पद्मलताभक्तिचित्रम् तथा १२ स्तम्भोद्गतया-स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामम् १३ विद्या धरन्तीति विद्याधरा-विशिष्टविद्याशक्तिमन्तः तेषां यमलयुगलानि-समानशीलानि द्वन्द्वानि तेषां यन्त्राणि-प्रपञ्चविशेषास्तैर्युक्तमिव १४ अर्चिषां-मणिरत्नप्रभाज्वालानां सहस्रैर्मालनीयं-परिवारणीयम् किमुक्तं भवति?-एवं नाम अत्यद्भुतैर्मणिरत्नप्रभाजालैराकलितमिव भाति यथा नूनमिदं न स्वाभाविकम् किन्तु विशिष्टविद्याशक्तिमत्पुरुषप्रपञ्चप्रभावितमिति, १५ 'रूवगसहस्सकलियं......सस्सिरीयरूवं' प्राग्वत् [पृ० ७६ पं०६-१२] १६ काञ्चनं च मणयश्च रत्नानि च काञ्चनमणिरत्नानि तेषां-तन्मयी स्तूपिका-शिखरं यस्य तत् तथा १७ नानाविधाभिः-नानाप्रकाराभिः पञ्चवर्णाभिर्घण्टाभिः पताकाभिश्च परि-सामस्त्येन मण्डितमग्र-

५

१०

टिप्पण]-राय० वि० । ○ 'खंमुग्गय' इत आरभ्य 'सस्सिरीयरूवं' इत्यन्तं-"क्वचिद् एतन्न दृश्यते"-राय० वि० ।

[18]चवलं ÷[19]मरीतिकवयं विणिम्मुयन्तं [20]लाइय-उल्लोइय[21]महियं [22]गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितलं [23]उवचियचन्दणकलसं चन्द[24]णघडसुकयतोरणपडिदुवारदेसभागं [25]आसत्तोसत्तविउलवट्टव[26]ग्घारियमल्लदामकलावं [27]पञ्चवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलियं [28]कालागुरुपवरकुंदरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं [पृ०७ पं०४-]

शिखरं यस्य तद् नानाविधपञ्चवर्णघण्टापताकापरिमण्डिताग्रशिखरम् १८ चपलं-चलं चिकचिकायमानत्वात् १९ मरीचिकवचं-किरणजालपरिक्षेपं विनिर्मुञ्चत् २० लाइयं नाम-यद् भूमेर्गोमयादिनोपलेपनम् २१ उल्लोइयं-कुडयानां मालस्य च सेटिकादिभिः सम्मृष्टीकरणम् लाइय-उल्लोइयाभ्यामिव महितं-पूजितं लाइय-उल्लोइयमहियं तथा २२ गोशीर्षेण-गोशीर्षनामकचन्दनेन सरसरक्तचन्दनेन च दर्दरेण-बहलेन चपेटाकारेण वा दत्ताः पञ्चाङ्गुलितला-हस्तका यत्र तद् गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलम् तथा २३ उपचिता-निवेशिताः चन्दनकलशा-मङ्गलकलशा यत्र तद् उपचितचन्दनकलशम् २४ चन्दनघटैः-चन्दनकलशैः सुकृतानि-सुष्ठु कृतानि शोभितानीति तात्पर्यार्थः यानि तोरणानि तानि चन्दनघटसुकृतानि तानि तोरणानि प्रति द्वारदेशभागं-द्वारदेशभागे यत्र तत् चन्दनघटसुकृततोरणप्रतिद्वारदेशभागम् तथा २५आ-अर्वाङ्-अधोभूमौ सक्त आसक्तो-भूमौ लग्न इत्यर्थः ऊर्ध्वं सक्त उत्सक्तः-उल्लोचतले उपरि संबद्ध इत्यर्थः विपुलो-विस्तीर्णः वृत्तो-वर्तुलः २६'वग्घारिय' इति-प्रलम्बितो माल्यदामकलापः-पुष्पमालासमूहो यत्र तद् आसक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापम् तथा २७ पञ्चवर्णेन सरसेन-सच्छायेन सुरभिणा मुक्तेन-क्षिप्तेन पुष्पपुञ्जलक्षणेनोपचारेण-पूजया कलितं पञ्चवर्णसरससुरभिमुक्तपुष्पपुञ्जोपचारकलितम् २८ 'कालागुरु...गंधवट्टिभूतं' इति

÷ 'मरीचि' स्थाने आर्षत्वात् 'मरीति' इति-पृ० ८८ × टिप्पण।

५

१०

रायपसेणइयं।

सुगंधवरगन्धियं गन्धवट्टिभूतं अच्छरगणसंघसंविकिण्णं दिव्वतुडियसद्दसंपणाइयं अच्छं [पृ० १९ पं० ५]जाव पडिरूवं। तस्स णं पिच्छाघरमण्डवस्स अंतो बहुसमरमणिज्जभूमिभागं विउव्वंति [कंडिका० ३३-४०] जाव मणीणं फासो। तस्स णं पेच्छाघरमंडवस्स उल्लोयं विउव्वंति पउमलयभत्तिचित्तं जाव [पृ०१९ पं०५] पडिरूवं।

[४२] तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं एगं महं वइरामयं अक्खाडगं विउव्वंति। तस्स णं अक्खाडयस्स

---

[पृ० ७ पं० ४–] प्राग्वत्, तथा २९ अप्सरोगणानां सङ्घः–समुदायस्तेन सम्यग्–रमणीयतया विकीर्णं–व्याप्तम्–अप्सरोगणसङ्घसंविकीर्णम् तथा ३० दिव्यानां त्रटितानाम् आतोद्यानां–वेणुवीणामृदङ्गादीनां ये शब्दास्तैः सम्प्रणादितं–सम्यक्–श्रोत्र–मनोहारितया प्रकर्षेण नादितं–शब्दवद् दिव्यत्रुटितशब्दसम्प्रणादितम् ३१ 'अच्छं जाव पडिरूवं'इति 'यावत्' शब्दकरणात् 'सण्हं अभिरूवं पडिरूवं' इति द्रष्टव्यम् एतच्च प्राग्वद् [पृ० १९ पं० ८] व्याख्येयम्। ३२ तस्य ३३ प्रेक्षागृहमण्डपस्य ३४ अन्तः–मध्ये ३५ बहुसमरमणीयं भूमिभागं ३६ विकुर्वंति तद्यथा–'आलिङ्गपुष्करमिति वा' [कण्डिका ३३–४०–पृ० ८१ पं० १२–] इत्यादि तदेव तावद् वक्तव्यं यावद् मणिस्पर्शसूत्रपर्यन्तः, तथा चाह–'जाव मणीणं फासो' इति। ३७ तस्य प्रेक्षागृहमण्डपस्य ३८ उल्लोकम्–उपरिभागं ३९ विकुर्वंति ४० पद्मलताभक्तिचित्रम् ४१ 'जाव पडिरूवं' इति 'यावत्' शब्दकरणात् 'अच्छं सण्हं' [पृ० १९ पं० ८–] इत्यादिविशेषणकदम्बकपरिग्रहः।

[४२] १तस्य–बहुसमरमणीयस्य भूमिभागस्य २बहुमध्यदेशभागे ३अत्र ४एकं महान्तं वज्रमयम् ५अक्षपाटं ६विकुर्वंति, ७तस्य

प्रेक्षागृहमण्डपे अक्षपाटः

रायपसेणइयं।

॥९८॥

अक्षपाटके मणिपीठिकासिंहास

[8]बहुमज्झदेसभागे [9]एत्थ णं [10]महेगं मणिपेढियं [11]विउव्वंति [12]अट्ठ जोयणाइं आयामविक्खम्भेणं [13]चत्तारि जोयणाइं बाहल्लेणं [14]सव्वमणिमयं [15]अच्छं सण्हं जाव [पृ० १९ पं० ५] पडिरूवं। [16]तीसे णं मणिपेढियाए [17]उवरि [18]एत्थ णं [19]महेगं सीहासणं [20]विउव्वइ, [21]तस्स णं सीहासणस्स [22]इमेयारूवे [23]वण्णावासे पण्णत्ते–[24]तवणिज्जमया चक्कला [25]रययामया सीहा [26]सोवण्णिया पाया [27]णाणामणिमयाइं पायसीसगाइं [28]जंबूणयमयाइं गत्ताइं [29]वइरामया संधी [30]णाणामणिमये वेच्चे, [31]से णं सीहासणे [32]ईहामिय–उसभ–तुरग–नर–मगर–विहग–वालग–किन्नर–रुरु–सरभ–

5

चाक्षपाटकस्य ८ बहुमध्यदेशभागे ९अत्र १०एकां महतीं मणिपीठिकां ११विकुर्वंति १२ अष्टौ योजनानि आयाम–विष्कम्भाभ्याम् १३चत्वारि योजनानि बाहल्येन–उच्चैस्त्वेनेति भावः, कथम्भूतां तां विकुर्वंति? इत्यत आह–१४सर्वमणिमयीम्–सर्वात्मना मणिमयीं ‘यावत्’ करणात् १५ ‘अच्छाम्’ इत्यादिविशेषणसमूहपरिग्रहः [पृ० १९ पं० ८] १६ तस्याश्च मणिपीठकाया १७ उपरि १८ अत्र १९महदेकं सिंहासनं २० विकुर्वति २१तस्य च सिंहासनस्य २२अयमेतद्रूपो २३वर्णावासः प्रज्ञप्तः, तद्यथा–२४तपनीयमयाः =चकला २५रजतमयाः सिंहा यैरुपशोभितं तत् सिंहासनमुच्यते २६सौवर्णिकाः–सुवर्णमयाः पादाः २७नानामणिमयानि पादशीर्षकाणि–पादानामुपरितना अवयवविशेषाः, २८ जाम्बूनदमयानि गात्राणि २९ वज्रमया–वज्ररत्नापूरिताः सन्धयो–गात्राणां सन्धिमेलाः ३० नानामणि○मयं वेचं–व्युतम्। ३१ तत् सिंहासनम् ३२ ईहामृग–ऋषभ–तुरग–नर–मकर–व्यालक–किन्नर–रुरु–सरभ–चमर–वनलता–

10

= ‘चकल’ इत्ययं शब्दो देश्यः–“कुण्डल–वट्टुल–दोलाफलय–विसालेसु चक्कलयं”–चक्कलं कुण्डलम् वर्तुलम् दोलाफलकम् विशालं चेति चतुर्थः”–देशीनाम० व० ३ गा० २०। भाषायाम् ‘चाकळा’ इति प्रतिभाति। ○ –मयं वच्चं–पा० ५।–मयं वद्धं पा० ४।– मयं वेच्चं

रायपसेण-इयं ।

चमर-कुञ्जर-वणलय-पउमलयभत्ति [पृ० ७६ पं० २] चित्तं स[33]सारसारोवचियमणिरयणपायवीढे [34]अत्थरगमिउमसूरगणवत्तयकुसंतलिंबकेसरपच्चत्थुयाभिरामे [35]आईणग-रूय-बूर-णवणीय-तूलफासमउए [कण्डिका ४०] [36]सुविरइयरयत्ताणे उवचिय[37]खोमदुगुल्लपट्टपडिच्छायणे रत्तंसुअसं[38]वुडे सुर[39]म्मे पासाइ[40]ए दरिसणिज्जे अभिरूवे पडिरूवे ।

पद्मलताभक्ति [पृ० ७६ पं० ६] चित्रम् । ३३ सारसारैः-प्रधानैः ४मणिरत्नैरुपचितेन पादपीठेन सह यत् तत् तथा, ३४ आस्तरकम्-आच्छादकं मृदु यस्य ⊖मसूरकस्य तद् आस्तरकमृदु,+ नवा त्वक् येषां ते नवत्वचः कुशान्ताः-दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कुशान्ताः-प्रत्यग्रत्वग्दर्भपर्यन्तरूपाणि लिम्बानि-कोमलानि नमनशीलानि च केसराणि मध्ये यस्य मसूरकस्य तत् नवत्वक्कुशान्तलिम्बकेसरम् आस्तरकमृदुना मसूरकेण नवत्वक्कुशान्तलिम्बकेसरेण =प्रत्यवस्तृतम्-आच्छादितं सत् यदभिरामं तत् तथा, ३५ [कण्डिका ४०] पूर्ववत् तथा ३६सुविरचितं रजस्त्राणमुपरि यस्य तत् सुविरचितरजस्त्राणम् ३७ उपचितं-परिकर्मितं यत् क्षौमं दुकूलं-कार्पासिकं वस्त्रं परिच्छादनं रजस्त्राणस्योपरि द्वितीयमाच्छादनं यस्य तत् तथा, तत उपरि ३८रक्तांशुकेन-अतिरमणीयेन रक्तेन वस्त्रेण संवृतम्-आच्छादितम् अत एव ३९सुरम्यम् ४०'पासाइए दरिसणिज्जे अभिरूवे पडिरूवे'इति [पृ०७ पं०१ तथा पृ०९ पं०६] प्राग्वत् ।

५

१०

तत्-च्युतम्-भा० १ । -मयं वेट्टुं ? भा० २ । 8 "प्राकृतत्वाच्च * पदोपन्यासव्यत्ययः"—राय० वि० । ⊖ भाषायाम्-'गालमसूरियुं' इति प्रसिद्धम् । + "विशेषणपूर्वापरनिपातः यादृच्छिकः प्राकृतत्वात्"-राय० वि० । = "विशेषणस्य परनिपातः प्राकृतत्वात्"-राय० वि० ।

* मूले 'उवचियमणिरयण' इति उपचित-मणिरत्न-पदयोर्व्यत्ययः । -'मणिरत्नोपचित'-इति उचितम् ।

रायपसेण-
इयं।

॥१००॥

[४३] तस्स णं सीहासणस्स उवरिं एत्थ णं महेगं विजयदूसं विउव्वंति, संख-कुंद-दगरय-अमयमहियफेणपुंजसंनिगासं सव्वरयणामयं अच्छं सण्हं पासादीयं दरिसणिज्जं अभिरूवं पडिरूवं। तस्स णं सीहासणस्स उवरिं विजयदूसस्स य बहुमज्झदेसभागे एत्थ णं महं एगं वयरामयं अंकुसं विउव्वंति, तंसि च णं वयराम- यंसि अंकुसंसि कुंभिक्कं मुत्तादामं विउव्वंति। से णं कुंभिक्के मुत्तादामे अन्नेहिं चउहिं अद्धकुंभिक्केहिं मुत्तादामेहिं—

[४३] १तस्य सिंहासनस्य २उपरि उल्लोके ३अत्र अस्मिन् स्थाने ४महदेकं ५विजयदूष्यं-वस्त्रविशेषः, आह च जीवाभिगममूलटीकाकृत्-"विजयदूष्यं वस्त्रविशेषः" [ ] इति। तं ६विकुर्वन्ति-स्वशक्त्या निष्पादयन्ति, कथम्भूतम्? इत्याह-७ शङ्ख-कुन्द-दकरजो-ऽमृतमथितफेनपुञ्जसन्निकाशम्-शङ्खः प्रतीतः, कुन्द इति-कुन्दकुसुमम् दकरजः-उदककणाः अमृतस्य-क्षीरोदधिजलस्य मथितस्य यः फेनपुञ्जो-डिण्डीरोत्करः तत्सन्निकाशं-तत्समप्रभम् पुनः कथम्भूतम्? इत्याह-८सर्वात्मना रत्नमयम् ९'अच्छं सण्हं पासाइयं'इत्यादिविशेषणजालं प्राग्वत् [पृ०१९ पं०८]। १० तस्य सिंहासनस्य-११ उपरि १२ तस्य विजयदूष्यस्य १३बहुमध्यदेशभागेऽत्र १४महान्तमेकं १५ वज्रमयं-वज्ररत्नमयमङ्कुशम्-अङ्कुशाकारं मुक्तादामावलम्बनाश्रयं १६ विकुर्वन्ति १७ तस्मिंश्च वज्ररत्नमयेऽङ्कुशे महदेकं १८ ÷कुम्भाग्रं-मगधदेशप्रसिद्धं कुम्भपरिमाणं मुक्तादाम १९ विकुर्वन्ति। २०तत् कुम्भाग्रं मुक्तादाम २१ अन्यैश्चतुर्भिः कुम्भाग्रैः-कुम्भ-

÷ "अग्रं पुरस्तात्, उपरि, परिमाणे"-इति मेदिनी-[अमर० टी० पृ० ३२९] इति वचनात् अत्र 'अग्र' शब्दः परिमाणवाची बोध्यः-कुम्भाग्रम्--कुम्भपरिमाणम्।

५

१०

सिंहास
विजय
ष्यम् व
च कुम्भ
रिमाणा
मौक्तिक

रायपसेण-
इय।

त[22]द्धुच्चत्तपमाणेहिं स[23]व्वओ स[24]मंता सं[25]परिक्खित्ते । [26]ते णं दामा त[27]वणिज्जलंबूसगा* [28]णाणामणिरयणविविहहार-द्धहारउवसोभियसमुदाया [29]ईसिं [30]अण्णमण्णमसंपत्ता [31]वाएहिं पुव्वावरदाहिणुत्तरागएहिं [32]मंदायं मंदायं =[33]एज्जमाणाणि एज्जमाणाणि पलंब[34]माणाणि× पलंबमाणाणि [35]वदमाणाणि वदमाणाणि [36]उरालेणं [37]मणुन्नेणं मणह[38]रेणं



परिमाणैर्मुक्तादामभिः २२तदर्धोच्चत्वप्रमाणमात्रैः २३ सर्वतः सर्वासु दिक्षु २४ समन्ततः–सामस्त्येन २५ सम्परिक्षिप्त–व्याप्तम् । २६ तानि पञ्चापि दामानि २७ तपनीयमया लम्बूसगा–आभरणविशेषरूपा अग्रभागे येषां प्रलम्बमानानां तानि तथा २८ नानामणिरत्नैः नानामणिरत्नमयैर्विविधैः–विचित्रैर्हारैरर्धहारैश्चोपशोभितः–सामस्त्येन शोभितः समुदायो येषां तानि तथा २९ तथा ईषत् मनाक् अन्योऽन्यं–परस्परम् असंप्राप्तानि–असंलग्नानि ३० पूर्वापरदक्षिणोत्तरागतैः[8] ३१ 'मन्दायं मन्दायं' इति मन्दं मन्दं ३२ कम्पमानानि ३३ ईषत्कम्पनवशादेव प्रकर्षत इतस्ततो मनाक् चलनेन लम्बमानानि लम्बमानानि ततः ३४ परस्परं सम्पर्कवशतः शब्दायमानानि शब्दायमानानि ३५ उदारेण स्फारेण शब्देनेति योगः स च स्फारः शब्दो मनःप्रतिकूलोऽपि भवति तत आह–३६ मनोज्ञेन मनोऽनुकूलेन ३७ तच्च मनोऽनुकूलत्वं लेशतः स्यात् अत आह–मनोहरेण मनांसि श्रोतॄणां हरति–एकान्तेनात्मवशं नयतीति मनोहरः○

५

१०

* –गा सुवण्णपयरगमंडियग्गा णा–वि० वा० । = "भृशाभीक्ष्ण्याऽविच्छेदे द्विः प्राक् तमबादेः"–[७–४–७३ हैमश०] इति अविच्छेदे द्विर्वचनम् यथा–'पचन्ति पचन्ति' इत्यत्र, एवमुत्तरत्राऽपि"–राय० वि० । × –णि वज्जंमा–पा० १ । –णि पझंझमा–भा० १ ।–णि पझझमा– पा० ३ । –णि पडंडमा–पा० ५ ।–णि पम्भक्खमा–पा० २ । 8 'वातैः' इति शेषः । ○ "लिहादेः आकृतिगणत्वाद् 'अच्' प्रत्ययः"–राय०वि० । "लिहादिभ्यः"–( ५–१–५० हैमश०) अत्र 'हृ' धातोः 'अच्'प्रत्यये हरः–मनोहरः ।

रायपसेण-
इयं।

॥१०२॥

कण्ण-मणणिव्वुतिकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा आपूरेमाणा सिरीए अतीव अतीव उवसोभेमाणा उवसोभेमाणा चिट्ठंति।

[४४]तए णं से आभिओगिए देवे तस्स सीहासणस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं एत्थ णं सूरिआभस्स देवस्स चउण्हं सामाणियसाहस्सीणं चत्तारि भद्दासणसाहस्सीओ विउव्वइ, तस्स णं सीहासणस्स

भद्रासनानि

तेन ३८ तदपि मनोहरत्वं कुतः? इत्याह–कर्ण–मनोनिर्वृतिकरेण ⊙ ततोऽयमर्थः–प्रतिश्रोतृ कर्णयोर्मनसश्च निर्वृतिकरः–सुखोत्पादकस्ततो मनोहरस्तेनेत्थम्भूतेन ३९ शब्देन ४० तान् प्रत्यासन्नान् प्रदेशान् ४१ सर्वतो–दिक्षु ४२ समन्ततो–विदिक्षु ४३ आपूरयन्ति-आपूरयन्ति, अत एव ४४ श्रिया–शोभया अतीवोपशोभमानानि ४५ तिष्ठन्ति। ५

[४४] १ ततः स आभियोगिको देवः २तस्य सिंहासनस्य ३अपरोत्तरेण–वायव्ये कोणे इत्यर्थः, ४ उत्तरेण–उत्तरस्याम् ५ ऐशान्याम् अत्र एतासु तिसृषु दिक्षु ६ सूर्याभस्य देवस्य ७ चतुर्णाम् सामानिकसहस्राणां योग्यानि ८ चत्वारि भद्रासनसहस्राणि ९ वि-

⊙ "निमित्त–कारण–हेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्–( सर्वनाम्नस्तृतीया च २-३-७ काशिकावृत्तौ ) इति वचनात् हेतौ तृतीया"–राय० वि०। ⁄ 'शत्रन्तस्य ⫽'शौ' इदं रूपम्" पा० ४-५ भा० १। "शत्रन्तस्य स्याद् इदं रूपम्"–भा० २। "शत्रन्तस्य स्यादौ इदं रूपम्"–मु० पु०। १०

⫽ वर्तमानकालसूचकः 'शतृ' प्रत्ययः तेन आ+पूरय्+अत्–'आपूरयत्' इति प्रयोगे साधिते प्रथमाबहुवचने शौ 'आपूरयन्ति'।

[10]पुरत्थिमेणं एत्थ णं सूरियाभस्स देवस्स [11]चउण्हं अग्गमहिसीणं [12]सपरिवाराणं [13]चत्तारि भद्दासणसाहस्सीओ विउव्वइ, तस्स णं सीहासणस्स [14]दाहिणपुरत्थिमेणं एत्थ णं सूरियाभस्स देवस्स [15]अब्भिंतरपरिसाए [16]अट्ठण्हं देवसाहस्सीणं [17]अट्ठ भद्दासणसाहस्सीओ विउव्वइ, एवं [18]दाहिणेणं [19]मज्झिमपरिसाए [20]दसण्हं देवसाहस्सीणं [21]दस भद्दासणसाहस्सीओ विउव्वंति [22]दाहिणपच्चत्थिमेणं [23]बाहिरपरिसाए [24]बारसण्हं देवसाहस्सीणं [25]बारस भद्दासणसाहस्सीओ विउव्वंति [26]पच्चत्थिमेणं [27]सत्तण्हं अणियाहिवतीणं [28]सत्त भद्दासणे विउव्वंति, [29]तस्स णं सीहासणस्स [30]चउदिसिं एत्थ णं [31]सूरियाभस्स देवस्स [32]सोलसण्हं आयरक्खदेवसाहस्सीणं [33]सोलस भद्दासणसाहस्सीओ विउव्वंति, [34]तंजहा–[35]पुरत्थिमेणं चत्तारि साहस्सीओ [36]दाहिणेणं चत्तारि साहस्सीओ [37]पच्चत्थिमेणं चत्तारि साहस्सीओ [38]उत्तरेण चत्तारि



5

कुर्वंति, १० पूर्वस्यां ११ चतसृणामग्रमहिषीणां १२सपरिवाराणां १३चत्वारि भद्रासनसहस्राणि, १४दक्षिणपूर्वस्याम् १५अभ्यन्तरपर्षदः १६ अष्टानां देवसहस्राणां योग्यानि १७ अष्टौ भद्रासनसहस्राणि, १८ दक्षिणस्यां १९ मध्यमपर्षदो २० दशानां देवसहस्राणां योग्यानि २१ दश भद्रासनसहस्राणि २२ दक्षिणापरस्यां नैर्ऋतकोणे इत्यर्थः, २३ बाह्यपर्षदो २४ द्वादशानां देवसहस्राणां २५ द्वादश भद्रासनसहस्राणि २६ पश्चिमायां २७ सप्तानामनीकाधिपतीनां २८ सप्त भद्रासनानि विकुर्वंति। तदनन्तरं २९ तस्य सिंहासनस्य ३० चतसृषु दिक्षु अत्र सामानिकादिदेवभद्रासनानां पृष्ठतः ३१ सूर्याभस्य देवस्य सम्बन्धिनां ३२ षोडशानामात्मरक्षदेवसहस्राणां योग्यानि ३३ षोडश भद्रासनसहस्राणि विकुर्वंति, ३४ तद्यथा–३५चत्वारि भद्रासनसहस्राणि पूर्वस्याए ३६चत्वारि दक्षिणतः ३७चत्वारि पश्चिमायाम् ३८चत्वारि उत्तरतः–सर्वसंख्यया सप्ताधिकानि चतुःपञ्चाशत्सहस्राणि–५४००७–भद्रासनानां विकुर्वंति।

10

रायपसेणइयं।

॥१०४॥

साहस्सीओ।

[४५] तस्स दिव्वस्स जाणविमाणस्स ८इमेयारूवे वण्णावासे पण्णत्ते, से जहा नाम ए अइरुग्गयस्स वा हेमंतिय-बालियसूरियस्स वा खयरिंगालाण वा रत्तिं पज्जलियाण वा जवाकुसुमवणस्स वा किंसुयवणस्स वा पारियाय-वणस्स वा सव्वतो समंता संकुसुमियस्स, भवे एयारूवे सिया ? णो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणवि-माणस्स एत्तो इट्ठतराए चेव जाव वण्णेणं [पृ० ८५ पं० २] पण्णत्ते। गंधो य फासो य जहा मणीणं [कण्डिका

[४५] १तस्य २दिव्यस्य यानविमानस्य ३अयम्-अनन्तरं वक्ष्यमाणस्वरूपो ४वर्णावासो-वर्णकनिवेशः ५तद्यथा-स यथा नाम ६अचिरो-द्गतस्य क्षणमात्रमुद्गतस्य ७हैमन्तिकस्य शिशिरकालभाविनो बालसूर्यस्य स ह्यत्यन्तमारक्तो भवति दीप्यमानश्चेत्युपादानम्, ८'वा' शब्दाः सर्वेऽपि समुच्चये, ९ खादिराङ्गाराणां वा १०रात्रौ प्रज्वलितानाम् ११ जपाकुसुमवनस्य वा १२ किंशुकवनस्य वा १३ पारिजातवनस्य वा १४ सर्वतः-सर्वासु दिक्षु समन्ततः-सामस्त्येन १५ संकुसुमितस्य सम्यक् कुसुमितस्य, अत्रान्तरे शिष्यः पृच्छति-यादृग्रूप एतेषां वर्णः १६ 'भवे एयारूवे सिया' इति स्यात्-कथञ्चिद् भवेद् एतद्रूपस्तस्य दिव्यस्य यानविमानस्य वर्णः ? सूरिराह-१७ 'नो इणट्ठे समट्ठे, तस्स णं दिव्वस्स.....मणामतरागे चेव वण्णे पण्णत्ते' इति प्राग्वत् [पृ०८५ पं० तथा २-५] व्याख्येयम्, १८गन्धः स्पर्शः यथा प्राग् मणीनामुक्तस्तथा वक्तव्यः, स चैवं-'तस्स णं दिव्वस्स जाणविमाणस्स इमे एयारूवे गंधे पण्णत्ते, तंजहा-से जहा नाम ए कोट्ठपुडाण

यानविमानवर्णकनिवेशः

५

१०

८ इमे+एयारूवे=इमेयारूवे-पृ० ९० * टिप्पण। १० 'रत्तिं' इति सप्तम्यर्थे द्वितीया प्राकृतत्वात्।

रायपसेण-
इयं।

३९-४०] तए णं से आभिओगिए देवे दिव्वं जाणविमाणं विउव्वइ विउव्वित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छइ उवागच्छित्ता सूरियाभं देवं करयलपरिग्गहियं [पृ० ६७ पं० ८] जाव पच्चप्पिणंति।

वा तगरपुडाण वा' [कं० ३९ पृ० ९१ पं० ४] इत्यादि। १९ 'तए णं से आभिओगिए देवे' इत्यादि २०'यावत्'करणात् 'करयल-परिग्गहियं दसनहं......वद्धावेइ वद्धावित्ता एयमाणत्तियं' इति [पृ० ५६ पं० १-२ तथा पृ० ६७ पं० ९] द्रष्टव्यम्।

यथा—"+उय विणयठतत्तिल्ले! ⊙पूरेमसि! =सिरिद्दहे गए सूरे। कत्तो ✓रत्तिं मुद्धे! पाणियसद्दा सउणयाणं○ ॥ [ ] इत्यत्र" —राय० विव०।

+'उय' इति 'पश्य' पदभावसूचको निपातः। "उअ पश्य"-(८-२-२१८ हैमश०) 8 'तत्तिल्ल' शब्दः तत्परवाची देश्यः। "तत्तिल्लो तल्लिच्छो य तप्परे"-देशीनाम० व० ५ गा० ३। ⊙ अस्य पदस्य भावः सम्यग् न अवगम्यते परंतु तात्पर्यानुसारी 'पूर्णे' इति अर्थः कल्प्यते। =अयं शब्दः खगपानभाजनवाचिना देश्य-'सिरिद्दही' [" 'सिरिद्दहो' खगपानभाजनम्"-देशीना० व०८ गा० ३२] शब्देन समानः प्रतीयते ततः प्रस्तुत 'सिरिद्दह' पदस्यापि स एव अर्थो गम्यते। ✓'रत्तिं' इति द्वितीयान्तमपि पदं सप्तम्यर्थसूचकं ज्ञेयम्। यथा च प्रस्तुतगाथायां 'रत्तिं' शब्दः सप्तम्यर्थं बोधयति तथा अत्र मूलसूत्रगतं 'रत्तिं'पदमपि सप्तमीभावसूचकं बोध्यम्। एतदर्थस्पष्टनार्थं च विवरणकारेण इयं गाथा उदाहरणरूपेण दर्शिता। ○उत विनयतत्परे! पूरिमे! श्रीद्रहे! गते सूर्ये। कुतः रात्रौ मुग्धे! पानियशब्दाः शकुनकानाम्॥ इति शब्दसंस्कारः। समग्रगाथायाः भावस्तु इत्थं बोध्यः-हे विनयपरायणे! मुग्धे! सूर्यः अस्तंगतः रात्रिर्जाता अतः जलपूर्णे खगपानभाजने पक्षिणां पानीयशब्दाः कुतः कारणात् स्युः? रात्रौ हि पक्षिणः शेरत एव न जलं पिबन्ति नापि किञ्चिद् भक्षयन्ति अतस्तेषां निवासे शान्तिरेव युक्ता तथापि अत्र रात्रौ पक्षिजलभाजने

५ ॥१०८

१०

[४६] तए णं से सूरियाभे देवे आभिओगस्स देवस्स अंतिए एयमट्ठं सोचा निसम्म हट्ठ-जाव [पृ० ४७ पं० ३-]-हियए दिव्वं जिणिंदाभिगमणजोग्गं उत्तरवेउव्वियरूवं विउव्वति विउव्वित्ता चउहिं अग्गमहिसीहिं सपरिवाराहिं दोहिं अणीएहिं, तंजहा-गंधव्वाणीएण य णट्टाणीएण य सद्धिं संपरिवुडे तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणे पुरत्थिमिल्लेणं

[४६] १दिव्यं-प्रधानं २जिनेन्द्रस्य-भगवतो वर्द्धमानस्वामिनोऽभिगमनाय-अभिमुखं गमनाय योग्यम्-उचितं जिनेन्द्राभिगमनयोग्यम् ३ उत्तरवैक्रियं रूपं ४ विकुर्वति, 8विकुर्वित्वा ५ चतसृभिरग्रमहिषीभिः सपरिवाराभिः६द्वाभ्यामनीकाभ्याम्-तद्यथा-गन्धर्वानीकेन नाट्यानीकेन च ७ सार्द्धम् ८ तत्र सहभावः स्वस्वामिभावमन्तरेणापि दृष्टः यथा समानगुण-विभवयोर्द्वयोर्मित्रयोः अतः स्वस्वामिभावप्रकटनार्थमाह-सम्यग् आराधकभावं बिभ्राणैः परिवृतः-संपरिवृतः ९ तद् दिव्यं यानविमानम् १० अनुप्रदक्षिणीकुर्वन्-पूर्वतोरणानुकूल्येन प्रदक्षिणीकुर्वन् ○पूर्वेण तोरणेनानुप्रविशति*-प्रविशन् ११ पूर्वेण त्रिसोपानप्रतिरूपकेण प्रतिविशिष्टरूपेण त्रिसोपा-

8 'वि' पूर्वात् 'कुर्व' धातोः 'विकुर्व्य' इति पदं साधु। 'विकुर्वित्वा' इति तु छान्दसमेतत्। ○ "पूर्वेण तोरणेन अनुप्रविशति" अस्य विवरणस्य मूलं पञ्चस्वपि टीकापाठप्रतिषु नोपलब्धम्। * -ति स्वसिंहासनानुकूलं प्रविशति प्र-भा० २।

पक्षिणां पानीयशब्दो जायते ततस्तस्यावश्यं किमपि कारणं भवेत्। अत्र "एकान्तनिर्जनस्थानं मत्वा आवां समागतौ तथापि नात्र एकान्तनिर्जनं प्रतिभाति" इत्येवं स्वीयं भावं कश्चिद् वल्लभः मुग्धायै सूचयति-एष गाथाध्वनिः।

रायपसेण-
इयं।

*तिसोमाणपडिरूवएणं दुरूहति[12] दुरूहित्ता जेणेव[13] [14]सीहासणे तेणेव[15] उवागच्छइ उवागच्छित्ता [16]सीहासणवरगए पुरत्थाभिमुहे[17] सण्णिसण्णे। तए[18] णं तस्स[19] सूरिआभस्स देवस्स चत्तारि[20] सामाणियसाहस्सीओ तं[21] दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणा[22] उत्तरिल्लेणं[23] तिसोवाणपडिरूवएणं दुरूहंति[24]= दुरूहित्ता पत्तयं पत्तयं पुव्वणत्थेहिं[25] भद्दासणेहिं णिसीयंति, अवसेसा[27] देवा य देवीओ य तं दिव्वं जाणविमाणं जाव दाहिणिल्लेणं[28] तिसोवाणपडिरूवएणं दुरूहंति[29] दुरूहित्ता पत्तेयं पत्तेयं पुव्वणत्थेहिं[30] भद्दासणेहिं निसीयंति[31]। ५ ॥१०७

नेन तद् यानविमानम् १२ आरोहति, आरुह्य च १३ यस्मिन्नेव देशे तस्या मणिपीठिकाया उपरि १४ सिंहासनं १५ तत्रोपागच्छति, उपागत्य च १६ सिंहासनवरगतः सन् १७ पूर्वाभिमुखः सन्निषण्णः सम्यक्–सकलसेवकजनचमत्कारकारिण्या उपवेशनस्थित्योपविष्टः। १८ ततः १९ तस्य सूर्याभस्य देवस्य २० चत्वारि सामानिकदेवसहस्राणि २१ तद् दिव्यं यानविमानम् २२ अनुप्रदक्षिणीकुर्वन्ति, २३ उत्तरेण त्रिसोपानप्रतिरूपकेण २४ आरोहन्ति, २५ पूर्वन्यस्तेषु भद्रासनेषु २६ निषीदन्ति २७ अवशेषाः–अभ्यन्तरपर्षदादयो देवा देव्यश्च २८ दक्षिणेन त्रिसोपानप्रतिरूपकेण २९ आरोहन्ति, आरुह्य च ३० स्वेषु भद्रासनेषु ३१ निषीदन्ति। १०

* 'त्रिसोपान-तिसोवाण-तिसोमाण' इति शब्दपरिवर्तनम्। = अत्र 'दुर्' उपसर्गपूर्वको 'रुह' धातुः प्रतीयते। 8 "अत्र सप्तम्यर्थे तृतीया"–राय० वि०।

रायपसेण-
इयं।

॥१०८॥

[४७] तए णं तस्स सूरियाभस्स देवस्स तं दिव्वं जाणविमाणं दुरूढस्स समाणस्स अट्ठ अट्ठमङ्गलगा पुरतो अ-
हाणुपुव्वीए संपत्थिता, तंजहा–सोत्थिय सिरिवच्छ जाव [पृ० १९ पं०४] दप्पणा। तयणंतरं च णं पुण्णकलस-
भिंगार दिव्वा य छत्तपडागा सचामरा दंसणरतिया आलोयदरिसणिज्जा वाउद्धुयविजयवेजयंतीपडागा ऊसिया
गगणतलमणुलिहन्ती पुरतो अहाणुपुव्वीए संपत्थिया। तयणंतरं च णं वेरुलियभिसंतविमलदण्डं पलम्बकोरंट-
मल्लदामोवसोभितं

५

यानविमानप्रस्थानम्

[४७] १ ततः २तस्य ३ सूर्याभस्य देवस्य ४ तद् दिव्यं यानविमानम् ५ आरूढस्य ६ पुरतोऽष्टौ ⁄अष्टमङ्गलकानि ७ यथानु-
पूर्व्या–वक्ष्यमाणपाठक्रमेणेत्यर्थः, ८ संप्रस्थितानि ९ तद्यथा–पूर्वं १० स्वस्तिकः तदनन्तरं ११ =श्रीवत्सः–१२ तदनन्तरं १३
पूर्णकलश–भृङ्गार–१४दिव्याऽऽतपत्र–पताकाः १५ सचामराः, कथम्भूताः? इत्याह–१६दर्शनरतिका दर्शने–अवलोकने रतिर्यासु ता
दर्शनरतिकाः, १७ इह दर्शनरतिकमपि किञ्चिदालोकदर्शनीयं न भवत्यमङ्गलत्वात् यथा गर्भवती युवतिः अत आह–आलोके–
बहिःप्रस्थानसमयभाविनि दर्शनीया–द्रष्टुं योग्या मङ्गल्यत्वात्, अन्ये त्वाहुः–"आलोके दर्शनीया–न पुनरत्युच्चा–आलोकदर्शनीया"
[ ] तथा १८ वातोद्धुता विजयसूचिका वैजयन्ती इति विजयवैजयन्ती च उत्सृता–ऊर्ध्वीकृता १९ गगनतलम्–अम्बरतलमनुलि-
खन्ती–अभिलङ्घयन्ती २० पुरतो यथानुपूर्व्या २१ संप्रस्थिता। २२ तदनन्तरं २३ वैडूर्यो वैडूर्यरत्नमयो ×भिसन्तो–दीप्यमानो
विमलो–निर्मलो दण्डो यस्य तत् तथा २४ प्रलम्बते इति प्रलम्बः तेन–प्रलम्बमानेन कोरण्टमाल्यदाम्ना–कोरण्टपुष्पमालयोपशोभितं

१०

⁄ पृ० १९ + टिप्पण। = पृ० १९ ÷ टिप्पण। × प्राकृतोऽयं प्रयोगः।

रायपसेण-
इयं।

चंदमंडलनिभं[25] समुस्सियं[26] विमलमायवत्तं[27] पवरसीहासणं[28] च मणिरयणभत्तिचित्तं[29] सपायपीढं[30] सपाउयाजोयस-[31]
माउत्तं बहुकिंकरामरपरिग्गहियं[32] पुरतो[33] अहाणुपुव्वीए[34] संपत्थियं[35]। तयणंतरं[36] च णं वइरामयवट्टलट्ठसंठियसुसि-[37]
लिट्ठपरिघट्ठमट्ठसुपतिट्ठिए[38] विसिट्ठे[39] अणेगवरपंचवण्णकुडभीसहस्सुस्सिए ≈परिमंडियाभिरामे वाउद्धुयवि-[40]
जयवेजयंतीपडागच्छत्तातिच्छत्तकलिते तुंगे[41]

॥१०९॥

प्रलम्बकोरण्टमाल्यदामोपशोभितं २५ चन्द्रमण्डलनिभं दीप्त्या शोभया वर्तुलतया च चन्द्रमण्डलाकारं २६ समुत्सृतं सम्यगूर्ध्वी- ५
कृतं २७ विमलमातपत्रं तथा २८ प्रवरं सिंहासनं २९ मणिरत्नैः भक्त्या—विच्छित्त्या चित्रं यत् तद् मणिरत्नभक्तिचित्रम् ३० सह पाद-
पीठं यस्य तत् सपादपीठं तथा ३१ पादुकायोगः—पादुकाद्वितयं तस्य समायोजनसमायुक्तम् सह पादुकायोगसमायुक्तं यस्य तत् तथा
३२ बहुभिः किङ्करैः-किङ्करकल्पैरमरैः परिगृहीतं ३३ पुरतो ३४ यथानुपूर्व्या ३५ सम्प्रस्थितम्। ३६ तदनन्तरं ३७ वज्रमयो वज्ररत्नमयः
तथा वृत्तं-वर्तुलं लष्टं-मनोज्ञं संस्थितं—संस्थानमाकारो यस्य स वृत्तलष्टसंस्थितः तथा सुश्लिष्टः—सुश्लेषापन्नावयवो मसृण इत्यर्थः परिघृष्ट
इव परिघृष्टः+ खरशाणया पाषाणप्रतिमावद् मृष्ट इव मृष्टः सुकुमारशाणया पाषाणप्रतिमेव सुप्रतिष्ठितो न तु तिर्यक्पतिततया ≈वक्रः ३८ अत १०
एव शेषध्वजेभ्यो विशिष्टः—अतिशायी, तथा ३९ अनेकानि—अनेकसङ्ख्याकानि वराणि—प्रधानानि पञ्चवर्णानि कुडभीसहस्राणि उत्सृतानि
यत्र सोऽनेकवरपञ्चवर्णकुडभीसहस्रोत्सृतः= ४० वातोद्धूतविजयवैजयन्तीपताकाच्छत्रातिच्छत्रकलितः, ४१ तुङ्गः—अत्युच्चो योजनस-

≈ वि० बा०। + -ष्टः परशा—पा० ५। ≈ "ततः एतेषां पदानां पदद्वयमीलनेन कर्मधारयः"—राय० वि०। = "क्तान्तस्य परनिपातः
सुखादिदर्शनात्"—राय० वि०—पृ० ४८ * टिप्पण।

गगणतलमणुलिहंतसिहरे जोअणसहस्समूसिए महतिमहालए महिंदज्झए पुरतो अहाणुपुव्वीए संपत्थिए। तयणंतरं च णं सुरूवणेवत्थपरिकच्छिया सुसज्जा सव्वालंकारभूसिया महया भडचडगरपहगरेणं पंच अणीयाहिवइणो पुरतो अहाणुपुव्वीए संपत्थिया। ०[तयणंतरं च णं बहवे आभिओगिया देवा देवीओ य सएहिं सएहिं रूवेहिं, सएहिं सएहिं विसेसेहिं, सएहिं सएहिं विंदेहिं, सएहिं सएहिं णेज्जाएहिं, सएहिं सएहिं णेवत्थेहिं पुरतो अहाणुपुव्वीए संपत्थिया] तयणंतरं च णं सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य सव्विड्ढीए जाव [पृ० ६९ पं० २]-रवेणं सूरियाभं देवं पुरतो पासतो य ८मग्गतो य समणुगच्छंति। ५



हस्तप्रमाणोच्छ्रायत्वात्, तथा ४२ गगनतलम्—अम्बरतलमनुलिखत् शिखरम्—अग्रभागो यस्य स तथा ४३ योजनसहस्रमुत्सृतः अत एव ४४ अतिशयेन महान् ४५ महेन्द्रध्वजः ४६ पुरतो यथानुपूर्व्या सम्प्रस्थितः। ४७ तदनन्तरं ४८ सुरूपं नेपथ्यं परिकक्षितं—परिगृहीतं यैस्ते तथा, तथा ४९ सुष्ठु—अतिशयेन सज्जाः—परिपूर्णाः स्वसामग्रीसमायुक्ततया प्रगुणीभूताः—५०सर्वालङ्कारविभूषिताः ५१ महता—अतिशयेन ५२ भटचटकर8पहकरेण—चटकरप्रधानभटसमूहेन *पञ्चानीकानि ५३ पञ्चानीकाधिपतयः ५४ पुरतो यथाऽनुपूर्व्या संप्रस्थिताः। ५५ तदनन्तरं च ५६ सूर्याभविमानवासिनो बहवो वैमानिका देवा देव्यश्च—५७सर्वर्द्ध्या 'यावत्'करणात् 'सव्वजुईए सव्वबलेणं' इत्यादि [पृ० ६९ पं० २–३–] परिग्रहः—५८ सूर्याभं देवं ५९ पुरतः पार्श्वतो मार्गतः—पृष्ठतः समनुगच्छन्ति। १०

०[ ] इति चिह्नान्तर्गतः पाठः विवरणे नास्ति। ८ "मग्गा पश्चात्"—देशीना० व० १ गा० ४। "मग्गो पश्चात्"—देशीना० व०६ गा० १११। अधुनातनमहाराष्ट्रीभाषायाम् 'पश्चात्' इत्यर्थे 'मग' शब्दः प्रसिद्धः। 8 पृ० १६ पं० ५ * टिप्पण। * नैतत् पदं मूलपाठे।

रायपसेण-
इयं।

[४८] [१]तए णं [२]से सूरियाभे देवे तेणं[३] पञ्चाणीयपरिक्खित्तेणं [४]वइरामयवट्टलट्ठसंठिएण जाव [कं० ४७ पं० ७] जोयणसहस्समूसिएणं महतिमहालतेणं महिंदज्झएणं पुरतो कड्ढिज्जमाणेणं चउहिं सामाणियसहस्सेहिं जाव [पृ० ४४ पं० २-] सोलसहिं आयरक्खदेवसाहस्सीहिं [७]अन्नेहि य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए [१०]जाव [पृ० ६९ पं० २] -रवेणं [११]सोधम्मस्स कप्पस्स मज्झंमज्झेणं [१२]तं दिव्वं देविड्ढिं दिव्वं[१३] देवजुतिं [१४]दिव्वं देवाणुभावं उवलालेमाणे[१५] उवलालेमाणे उवदंसेमाणे उवदंसेमाणे ५
○पडिजागरेमाणे पडिजागरेमाणे

॥११२॥

[४८] १ततः २स सूर्याभो देवः ३तेन पञ्चानीकपरिक्षिप्तेन ४यथोक्तविशेषणविशिष्टेन [पृ०१०९पं०८-] महेन्द्रध्वजेन पुरतः प्रकृष्यमाणेन ५चतुर्भिः सामानिकसहस्रैः चतसृभिः सपरिवाराभिरग्रमहिषीभिः तिसृभिः पर्षद्भिः सप्तभिरनीकाधिपतिभिः ६षोडशभिरात्मरक्षदेवसहस्रैः ७अन्यैश्च बहुभिः सूर्याभविमानवासिभिर्वैमानिकैर्देवैर्देवीभिश्च ८सार्धं संपरिवृतः ९सर्वद्धर्या सर्वद्युत्या १०'यावत्' करणात् 'सव्वबलेणं सव्वसमुदएणं सव्वादरेण सव्वविभूसाए सव्वविभूईए सव्वसंभमेणं सव्वपुप्फवत्थगंधमल्लालङ्कारेणं सव्वदिव्वतुडियसद्दसंनिनाएणं महया इड्ढीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडियजमगसमगपडुप्पवाइयरवेणं संख-पणव-पडह-भेरि-झल्लरि-खरमुहि-हुड्डक-मुरय-मुइंग-दुन्दुभिनिग्घोसनाइयरवेणं' इति [पृ० ६९ पं० ३-] परिगृह्यते। ११ सौधर्मस्य कल्पस्य १०
मध्येन १२ तां दिव्यां देवर्द्धिम् १३ दिव्यां देवद्युतिम् १४ दिव्यां देवानुभूतिम् उपदर्शयन् १५ उपलालयन् उपलालयन्-लीलया

○ वि० वा०।

जेणेव[16] सोहम्मस्स कप्पस्स [17]उत्तरिल्ले णिज्जाणमग्गे तेणेव[18] उवागच्छति, [19]जोयणसयसाहस्सितेहिं विग्गहेहिं [20]ओवयमाणे [21]वीतीवयमाणे [22]ताए उक्किट्ठाए [पृ० ५८ पं० १] जाव [23]तिरियं [24]असंखिज्जाणं दीवसमुद्दाणं [25]मज्झंमज्झेणं वीइवयमाणे वीइवयमाणे [26]जेणेव [27]नंदीसरवरे दीवे [28]जेणेव [29]दाहिणपुरत्थिमिल्ले [30]रतिकरपव्वते [31]तेणेव उवागच्छति उवागच्छित्ता तं [32]दिव्वं देविड्ढिं जाव दिव्वं देवाणुभावं [33]पडिसाहरेमाणे पडिसाहरेमाणे [34]पडिसंखेवेमाणे पडिसंखेवेमाणे [35]जेणेव जम्बूदीवे दीवे [36]जेणेव भारहे वासे [37]जेणेव आमलकप्पा नयरी [38]जेणेव अम्बसालवणे चेइए [39]जेणेव समणे भगवं महावीरे ५

---

उपभुञ्जान इति भावः। १६येनैव सौधर्मस्य कल्पस्य १७उत्तराहो निर्याणमार्गः–निर्गमनमार्गः १८तेनैव पार्श्वेन उपागच्छति २२'ताए उक्किट्ठाए' इत्यादि पूर्ववत् [पृ० ५८ पं० ७] यावत् दिव्यया देवगत्या १९ योजनलक्षप्रमाणैर्विग्रहैः–क्रमैः २० अवपतन्–अधस्ताद् अवतरन् २१व्यतिव्रजंश्च–गच्छंश्च २३तिर्यग् २४असंख्येयानां द्वीप–समुद्राणां २५मध्यंमध्येन २६यस्मिन्नेव प्रदेशे २७नन्दीश्वरो द्वीपः २८यस्मिन्नेव च प्रदेशे तस्मिन् नन्दीश्वरे द्वीपे २९दक्षिणपूर्वः आग्नेयकोणवर्ती ३०रतिकरनामा पर्वतः ३१तस्मिन् उपागच्छति, उपागत्य च ३२ तां दिव्यां देवर्द्धिम् यावत् दिव्यं देवानुभावं ३३ शनैः शनैः प्रतिसंहरन् प्रतिसंहरन्–३४ एतदेव पर्यायेण व्याचष्टे–प्रतिसंक्षिपन् प्रतिसंक्षिपन् ३५ यस्मिन् प्रदेशे जम्बूद्वीपो नाम द्वीपः ३६ तत्र च जम्बूद्वीपे यस्मिन् प्रदेशे भारतवर्षम् ३७ तस्मिंश्च भारतवर्षे यस्मिन् प्रदेशे आमलकल्पा नगरी ३८ तस्याश्च आमलकल्पाया नगर्या बहिर् यस्मिन् प्रदेशे आम्रशालवनं चैत्यम् ३९ तस्मिंश्च १०

रायपसेण-
इयं।

=तेणेव उवागच्छइ उवागच्छित्ता समणं भगवन्तं महावीरं तेणं दिव्वेणं जाणविमाणेणं तिक्खुत्तो आयाहिणं-पयाहिणं करेइ करित्ता समणस्स भगवतो महावीरस्स उत्तरपुरत्थिमे दिसिभागे तं दिव्वं जाणविमाणं ईसिं चउरंगुलमसंपत्तं धरणितलंसि ठवेइ ठवित्ता चउहिं अग्गमहिसीहिं सपरिवाराहिं दोहिं अणीयाहिं-तंजहा गंधव्वाणिएण य णट्टाणिएण य-सद्धिं संपरिवुडे ताओ दिव्वाओ जाणविमाणाओ पुरत्थिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति। तए णं तस्स सूरियाभस्स देवस्स चत्तारि सामाणियसाहस्सीओ ताओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति, अवसेसा देवा य देवीओ य ताओ दिव्वाओ जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहन्ति।

५ ॥११३॥

चैत्ये यस्मिन् प्रदेशे श्रमणो भगवान् महावीरः ४० तत्र उपागच्छति उपागत्य च ४१श्रमणं भगवन्तं महावीरं ४२तेन प्रागुक्तस्वरूपेण दिव्वेन यानविमानेन सह ४३ त्रिकृत्वः-त्रीन् वारान् ४४आदक्षिणप्रदक्षिणीकरोति आदक्षिणप्रदक्षिणीकृत्य च ४५श्रमणस्य भगवतो महावीरस्य अपेक्षया यः ४६उत्तरपूर्वो दिग्भागः तम् अपक्रामति-गच्छति अपक्रम्य च ४७तद् दिव्यं यानविमानम् ४८ईषद्-एतदेव प्रकटयति-चतुरङ्गुलम्-चतुर्भिः अङ्गुलैरित्यर्थः-असंप्राप्तं सत् ४९ धरणीतले स्थापयति स्थापयित्वा ५० चतसृभिरग्रमहिषीभिः सपरिवाराभिः ५१ द्वाभ्यामनीकाभ्याम्-तद्यथा-गन्धर्वानीकेन नाट्यानीकेन च ५२ सार्धं संपरिवृतः ५३ तस्माद् दिव्याद् यानविमानात् ५४ पूर्वेण त्रिसोपानप्रतिरूपकेण ५५ प्रत्यवतरति, ५६ चत्वारि सामानिकदेवसहस्राणि उत्तरेण, ५७ शेषा दक्षिणेन।

१०

= "सर्वत्र तृतीया सप्तम्यर्थे द्रष्टव्या प्राकृतत्वात्"-राय० विव०-पृ० ३७+ टिप्पण।

[४९] तए णं से सूरियाभे देवे चउहिं अग्गमहिसीहिं जाव [पृ० ४४ पं० २] सोलसहिं आयरक्खदेवसाहस्सीहिं अण्णेहि य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए [पृ० ६९ पं० २–] जाव–णादितरवेणं जेणेव समणे भगवं महावीरे तेणेव उवागच्छति उवागच्छित्ता समणं भगवंतं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेति करित्ता वंदति नमंसति वंदित्ता नमंसित्ता एवं वयासी–'अहं णं भंते! सूरियाभे देवे देवाणुप्पियाणं वन्दामि नमंसामि जाव पज्जुवासामि'। ५

[५०] ⁸सूरियाभाइ समणे भगवं महावीरे सूरियाभं देवं एवं वयासी–'पोराणमेयं सूरियाभा! जीयमेयं सूरियाभा! किच्चमेयं सूरियाभा! करणिज्जमेयं सूरियाभा! आइण्णमेयं सूरियाभा! अब्भणुण्णायमेयं सूरियाभा! जं णं भवणवइ–वाणमंतर–जोइस–वेमाणिया देवा अरहंते भगवते वंदंति नमंसंति वंदित्ता नमंसित्ता तओ पच्छा

---

[४९] १ 'वंदामि नमंसामि जाव पज्जुवासामि' इत्यत्र 'यावत्' शब्दकरणात् 'सक्कारेमि सम्माणेमि कल्लाणं मंगलं देवयं चेइयं पज्जुवासेमि' इति [पृ० ५८ पं० ५–] परिग्रहः। १०

[५०] ततः १ *'सूरियाभाइ' इत्यादि, ⌐सूर्याभ आदिः मुख्यः पर्युपासकतया यस्य स सूर्याभादिः २ श्रमणो भगवान् महावीरः ३ तं सूर्याभं देवम् ४ एवम् अवादीत्–५ 'पोराणमेयं' इत्यादि प्राग्वत् [पृ० ५९.–६०]

---

⁸सूरियाभा य स–भा० २। * अत्रापि 'सूरियाभा!' 'इ' इति पदद्वयमेव संगतम्–पृ० ५९×टिप्पण। ⌐ सूर्याभात् आदिः पा० ४–५। सूर्याभा आदि मुख्यः भा० १।

साइं साइं नाम-गोत्ताइं साहिंति तं पोराणमेयं सूरियाभा ! जाव अब्भणुण्णायमेयं सूरियाभा !'। [पृ० ५९-६०-कंडिका २०] तए णं से सूरियाभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठ-[पृ० ४७ पं० ३] जाव समणं भगवंतं महावीरं वंदति नमंसति वंदित्ता नमंसित्ता [6]नच्चासण्णे [7]नातिदूरे [8]सुस्सूसमाणे णमंसमाणे [9]अभिमुहे [10]विणएणं [11]पंजलिउडे [12]पज्जुवासति।

[५१] [1]तए णं [2]समणे भगवं महावीरे [3]सूरियाभस्स देवस्स [4]तीसे य [5]महतिमहालिताए परिसाए जाव परिसा जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया। ५

६ नात्यासन्नः-नातिनिकटः अवग्रहपरिहारात् नात्यासन्ने वा स्थाने वर्तमान इति गम्यम् ७ न नैव अतिदूरः अतिविप्रकृष्टः अनौचित्यपरिहारात् नातिदूरे वा ८ भगवद्वचनानि श्रोतुमिच्छन् ९ अभि भगवन्तं लक्ष्यीकृत्य मुखमस्येति अभिमुखः-भगवतः सम्मुख इत्यर्थः १० विनयेन हेतुना ११ प्रकृष्टः प्रधानः-ललाटतटघटितत्वेन-अञ्जलिः-हस्तन्यासविशेषः-कृतः येन स प्राञ्जलिकृतः÷ १२ पर्युपास्ते-सेवते। १०

[५१] १ततः २श्रमणो भगवान् महावीरः ३सूर्याभस्य देवस्य श्वेतस्य राज्ञः धारणीप्रमुखानां च देवीनाम् ४तस्याश्च ५'महतिमहालिताए' इति-अतिशयेन महत्याः 'इसिपरिसाए' इति-ऋषयः त्रिकालदर्शनिनः तेषां पर्षत् तस्याः-अवध्यादिजिनपर्षद इत्यर्थः मुनिपर्षदः-

÷ "सुखादिदर्शनाद् क्तान्तस्य परनिपातः" राय० वि०-पृ० ४८ * टिप्पण।

यथोक्तानुष्ठानानुष्ठायिसाधुपर्षदः 'जतिपरिसाए' इति यतन्ते उत्तरगुणेषु विशेषतः इति यतयः–विचित्रद्रव्याद्यभिग्रहाद्युपेताः साधवः तेषां पर्षदो यतिपर्षदः 'विदुपरिसाए' इति विद्वत्परिषदः–अनेकविद्वज्जनपर्षदः देवपर्षदः क्षत्रियपर्षदः इक्ष्वाकुपर्षदः कौरव्यपर्षदः कथंभूतायाः? इत्याह–'अणेगसयाए' इति अनेकानि पुरुषाणां शतानि संख्यया यस्यां सा अनेकशता तस्याः 'अणेगवंदाए' इति अनेकानि वृन्दानि यस्याः सा तथा तस्याः 'अणेगसयवंदपरिवाराए' इति अनेकशतानि अनेकशतसंख्यानि वृन्दानि परिवारो यस्याः सा तथा तस्याः 'महतिमहालियाए परिसाए' अतिशयेन महत्याः पर्षदः। 'ओहबले' इति ओघेन प्रवाहेण बलं यस्य–न तु कथयतो बलहानिः उपजायते इति भावः। 'एवं जहा उववाइए तहा भाणियव्वं' इति–एवं यथा औपपातिके ग्रन्थे तथा वक्तव्यम्। तच्च एवम्–"=अइबले× महाबले अपरिमियबल–वीरिय–तेय–माहप्प–कंतिजुत्ते सारदनवथणियमहुरगंभीर–कुंचनिग्घोस–दुंदुभिस्सरे उरे वित्थडाए कंठे वट्टियाए सिरे समावत्ताए अगग्गयाए अमम्मणाए फुडविसयमहुरगंभीरगाहिगाए सव्वक्खरसन्निवाइयाए गिराए सव्वभासाणुगामिणीए सव्वसंसयविमोयणीए अपुणरुत्ताए सरस्सईए जोयणनीहारिणा सरेणं अद्धमागहाए भासाए अरिहा धम्मं परिकहेइ–

5

= अतः आरभ्य यावान् प्राकृतः पाठः सूचितः तावान् भा० १ प्रतौ न प्रतिभाति। × अतिबलः महाबलः अपरिमितबल–वीर्य–तेजः–माहात्म्य–कान्तियुक्तः शारदनवस्तनितमधुरगम्भीर–क्रौञ्चनिर्घोष–दुन्दुभिस्वरः उरसि विस्तृतया कण्ठे वृत्तिकया–वर्तुलया शिरसि समावृत्तया अगद्गदया अमन्मनया स्फुटविषयमधुरगम्भीरग्राहिकया सर्वाक्षरसन्निपातिकया गिरा सर्वभाषानुगामिन्या सर्वसंशयविमोचिन्या अपुनरुक्तया सरस्वत्या योजननिर्हारिणा स्वरेण अर्धमागध्या भाषया अर्हन् धर्म परिकथयति। तद् यथा अस्ति लोकः अस्ति अलोकः अस्ति जीवः अस्ति अजीवः'। एष समग्रः पाठः तस्य व्याख्याऽपि च औपपातिकग्रन्थतः (पृ० ७७) बोध्या।

१०

[५२] तए णं से सूरियाभे देवे समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ-[पृ० ४७ पं० ३] जाव-हयहियए उट्ठाए उट्ठेति उट्ठित्ता समणं भगवंतं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी-

तंजहा-अत्थि लोए अत्थि अलोए अत्थि जीवे अत्थि अजीवे" [औपपातिक पृ० ७७ पं० १२-सू० ३४] इत्यादि तावत् यावत् "तए ण सा महइमहालिया परिसा समणस्स भगवतो महावीरस्स [कण्डिका ११] अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा समणं भगवंतं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ करित्ता वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी-'सुयक्खाए णं भंते! निग्गंथे पावयणे, नत्थि णं केइ समणे माहणे वा एरिसं धम्मं आइक्खित्तए' एवं वइत्ता जामेव दिसिं पाउब्भूता तामेव दिसिं पडिगया" [औपपातिक पृ० ८२ पं० १२ सू० ३५-३७] "तए णं से+ राया समणस्स भगवतो महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठचित्तमाणंदिए जाव [पृ० ४७ पं० ३ तथा १२-] हरिसवसविसप्पमाणहियए समणं भगवंतं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता पसिणाइं पुच्छइ पुच्छित्ता =अट्ठाइं परियाएइ परियाइत्ता उट्ठाए उट्ठेइ उट्ठित्ता समणं भगवंतं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी-'सुयक्खाए णं भंते! निग्गंथे पावयणे जाव [पृ० ४३ पं० ३] एरिसं धम्मं आइक्खित्तए' एवं वइत्ता हत्थिं दुरूहइ दुरूहित्ता समणस्स भगवतो महावीरस्स अंतियाओ अंबसालवणाओ चेइयाओ पडिनिक्खमइ पडिनिक्खमित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगते" इति। इदं च प्रायः सकलमपि सुगमम्। नवरम्-यामेव दिशमवलम्ब्य-किमुक्तं भवति?-यतो दिशः सकाशात् प्रादुर्भूतः-समवसरणे समागतः-तामेव दिशं प्रतिगतः।

+ से पएसी राया-भा० २। = अर्थात् पर्याददाति पर्यादाय।

प्र०-अहं णं भंते! सूरियाभे देवे किं भवसिद्धिते अभवसिद्धिते? सम्मदिट्ठी मिच्छादिट्ठी? परित्तसंसारिते अणंतसंसारिते? सुलभबोहिए दुल्लभबोहिए? आराहते विराहते? चरिमे अचरिमे?

सूर्याभः भगवन्तं पृच्छति

[५२] सम्प्रति सूर्याभो देवो धर्मदेशनाश्रवणतो जातप्रभूततरसंसारविरागः स्वविषयं भव्यत्वादिकं पिपृच्छिषुः यत् करोति तद् आह-१ भवैः सिद्धिर्यस्य असौ भवसिद्धिकः-भव्य इत्यर्थः २तद्विपरीतः-अभवसिद्धिकः ?-अभव्य इत्यर्थः ३ भव्योऽपि कश्चिद् मिथ्यादृष्टिर्भवति कश्चित् सम्यग्दृष्टिः ततः आत्मनः सम्यग्दृष्टित्वनिश्चयाय पृच्छति-सम्यग्दृष्टिकः ४ मिथ्यादृष्टिकः? ५ सम्यग्दृष्टिरपि कश्चित् परिमितसंसारो भवति कश्चिद् अपरिमितसंसारः उपशमश्रेणिशिरःप्राप्तानामपि केषांचिद् अनन्तसंसारभावात् अतः पृच्छति-परीत्तसंसारिकः ६ अनन्तसंसारिकः? ५ परीत्तः परिमितः स चासौ संसारश्च परीत्तसंसारः सः अस्य अस्ति-इति परीत्तसंसारिकः× एवम् ६ अनन्तश्चासौ संसारश्च अनन्तसंसारः सः अस्य अस्ति-इति अनन्तसंसारिकः ७ परीत्तसंसारिकोऽपि कश्चित् सुलभबोधिको भवति यथा ○शालिभद्रादिकः कश्चिद् दुर्लभबोधिको यथा ⊙पुरोहितपुत्रजीवः ततः पृच्छति-सुलभा बोधिः भवान्तरे जिनधर्मप्राप्तिर्यस्य असौ सुलभबोधिकः एवं ८ दुर्लभबोधिकः? ९ सुलभबोधिकोऽपि कश्चिद् बोधिं लब्ध्वा विराधयति ततः पृच्छति-आराधयति-सम्यक् पालयति बोधिम् इति आराधकः १० तद्विपरीतो विराधकः? ११ आराधकोऽपि कश्चित् तद्भवमोक्षगामी न भवति ततः पृच्छति-चरमः अचरमो वा? चरमः अनन्तरभावी भवो यस्य असौ =चरमः १२ तद्विपरीतः अचरमः।

५

१०

× "अतोऽनेकस्वरात्" [७-२-६ हैमश० ] 'इक' प्रत्ययः"—राय० वि० । ○ शालिभद्रकथा प्रसिद्धा। ⊙ पुरोहितपुत्रस्य विशेषसंज्ञा नावगता तथापि तस्य कथाऽपि प्रसिद्धा। सा च श्रीपुण्य० पञ्चकल्पभाष्ये लि० पृ० १८-१९ 'सारणी' प्रव्रज्योदाहरणे। = "अभ्रादिभ्यः"

रायपसेणइयं। भगवतः प्रतिवचः

[५३] उ०-×सूरियाभाइ समणे भगवं महावीरे सूरियाभं देवं एवं वदासी—

सूरियाभा ! तुमं णं भवसिद्धिए नो अभवसिद्धिते जाव [पृ० ११८ पं० १] चरिमे णो अचरिमे।

[५४] तए णं से सूरिआभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए [पृ० ४७ पं० ३-] परमसोमणस्सिए समणं भगवंतं महावीरं वंदति नमंसति वंदित्ता नमंसित्ता एवं वदासी— ॥११९॥

तुब्भे णं भंते ! सव्वं जाणह सव्वं पासह, सव्वओ जाणह सव्वओ पासह, सव्वं कालं जाणह सव्वं ५

---

[५३] एवमुक्ते =१सूर्याभादिः श्रमणो भगवान् महावीरः २तं सूर्याभं देवम् ३एवम् अवादीत्-४भोः सूर्याभ ! ५त्वं भवसिद्धिकः ६न अभवसिद्धिकः ७'यावत्' करणात् 'सम्मदिट्ठी नो मिच्छादिट्ठी, परित्तसंसारिए नो अणंतसंसारिए, सुलभबोहिए नो दुल्लभबोहिए, आराहए नो विराहए' इति [पृ० ११८ पं० १] परिग्रहः।

[५४] १यूयं २भदन्त ! ३सर्वं केवलवेदसा जानीथ ४सर्वं केवलदर्शनेन पश्यथ-अनेन द्रव्यपरिग्रहः ५तत्र 'सर्व'शब्दो देशकात्स्न्र्येऽपि वर्तते यथा-'अस्य सर्वस्यापि ग्रामस्य अयमधिपतिः' इति सचराचरविषयज्ञान-दर्शनप्रतिपादनार्थमाह-सर्वतः-सर्वत्र दिक्षु १० विदिक्षु ऊर्ध्वम् अधो लोके अलोके च-इति भावः जानीथ पश्यथ च-अनेन क्षेत्रपरिग्रहः। ६तत्र सर्वद्रव्यसर्वक्षेत्रविषयं वार्तमानिक-

---

[ ७-२-४६ हैमश० ] इति मत्वर्थीयः 'अ' प्रत्ययः"—राय० वि०। × सूरियामा समणे-भा० २। = पृ० ११४ * टिप्पण तथा पृ० ५९ × टिप्पण।

कालं पासह, सव्वे भावे जाणह सव्वे भावे पासह। जाणंति णं देवाणुप्पिया! मम पुव्विं वा पच्छा वा मम-एयरूवं दिव्वं देविड्ढि दिव्वं देवजुइं दिव्वं देवाणुभावं लद्धं पत्तं अभिसमण्णागयं ति, तं इच्छामि णं देवाणुप्पियाणं भत्तिपुव्वगं गोयमातियाणं समणाणं निग्गंथाणं दिव्वं देविड्ढि दिव्वं देवजुइं दिव्वं देवाणुभावं दिव्वं



मात्रमपि ज्ञानं दर्शनं वा सम्भाव्येत ततः सकलकालविषयज्ञान-दर्शनप्रतिपादनार्थमाह-सर्वकालम्-अतीतम् अनागतं वर्तमानं च जानीथ पश्यथ-एतेन कालपरिग्रहः ७ तत्र कश्चित् सर्वद्रव्य-सर्वक्षेत्र-सर्वकालविषयमपि ज्ञानं सर्वपर्यायविषयं न संभावयेत् यथा ~मीमांसकादिः अत आह-सर्वान् भावान् पर्यायान् प्रतिद्रव्यमात्मीयान् परकीयांश्च केवलवेदसा जानीथ केवलदर्शनेन पश्यथ। अथ भावा दर्शनविषया न भवन्ति ततः कथमुक्तम् 'सव्वे भावे पासह' इति? नैष दोषः, उत्कलितरूपतया हि ते भावा दर्शनविषया न भवन्ति अनुत्कलितरूपतया तु ते भवन्त्येव। तथा चोक्तम्-"निर्विशेषं विशेषाणां ग्रहो दर्शनमुच्यते" [ ] ८ ततः 'जाणन्ति णं' इति पूर्ववत्। देवानांप्रियाः! ९ पूर्वमपि-अनन्तरम् उपदर्श्यमाननाट्यविधेः १० पश्चादपि च-उपदर्श्यमाननाट्यविधेः उत्तरकालम् ११ मम एतद्रूपां दिव्यां देवर्द्धिम् दिव्यां देवद्युतिम् दिव्यं देवानुभावम् १२ लब्धं देशान्तरगतमपि किञ्चिद् भवति तत आह-प्राप्तम् १३ प्राप्तमपि किञ्चिद् अन्तरायवशाद् अनात्मवशं भवति तत आह-अभिसमन्वागतम्। १४ ततः इच्छामि देवानांप्रियाणां पुरतः १५ भक्तिपूर्वकम्-बहुमानपुरस्सरम् १६ गौतमादीनां श्रमणानां निर्ग्रन्थानां दिव्यां

~ मीमांसका हि सर्वद्रव्य-क्षेत्र-काल-भावविषयं ज्ञानं न मन्यन्ते। ते एवमाहुः-"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः। दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत्" ॥ [श्लो० वा० सू० २ श्लो० ११७] इत्यादि।

बत्तीसतिबद्धं नट्टविहं उवदंसित्तए।

[५५] तए णं समणे भगवं महावीरे सूरियाभेणं देवेणं एवं वुत्ते समाणे सूरियाभस्स देवस्स एयमट्ठं णो आढाति णो परियाणति–तुसिणीए संचिट्ठति।

[५६] तए णं से सूरियाभे देवे समणं भगवन्तं महावीरं दोचं पि तच्चं पि एवं वयासी—

'तुब्भे णं भंते! सव्वं जाणह [पृ० ११९ पं० ५] जाव उवदंसित्तए त्ति कट्टु समणं भगवन्तं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ करित्ता वंदति नमंसति वंदित्ता नमंसित्ता उत्तरपुरत्थिमं दिसीभागं अवक्क- ५

देवर्द्धिम् दिव्यां देवद्युतिम् दिव्यं देवानुभावम् उपदर्शयितुम् १७ द्वात्रिंशद्विधम्–द्वात्रिंशत्प्रकारं नाट्यविधम्–नाटयविधानम् १८ उपदर्शयितुम्।

[५५] १ ततः २ श्रमणो भगवान् महावीरः ३ सूर्याभेण देवेन ४ एवमुक्तः सन् ५ सूर्याभस्य देवस्य ६ एनम्–अनन्तरोदितम्–अर्थं ७ न आद्रियते–न तदर्थकरणाय आदरपरो भवति ८ नापि परिजानाति अनुमन्यते स्वतो वीतरागत्वात् गौतमादीनां च नाट्यविधेः स्वाध्यायादिविघातकारित्वात् ९ केवलं तूष्णीकः १० अवतिष्ठते। १०

[५६] एवं* १ द्वितीयमपि वारम् २ तृतीयमपि वारम् उक्तः सन् भगवान् एवमेव तिष्ठति। ततः पारिणामिकया बुद्ध्या तत्त्वमवगम्य 'मौनमेव भगवतः उचितं न पुनः किमपि वक्तुम् केवलं मया भक्तिरात्मीया उपदर्शनीया' इति प्रमोदातिशयतः जातपुलकः

* अत्र विवरणकारलब्धपाठ–प्रतिगतमूलसूत्रपाठयोर्भेदः प्रतीयते।

मति अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहणति समोहणित्ता संखिज्जाइं जोयणाइं दण्डं निस्सिरति अहाबायरे० [पृ०५६ पं०३-] अहासुहुमे०। दोचं पि विउव्वियसमुग्घाएणं जाव बहुसमरमणिज्जं भूमिभागं विउव्वति। से जहा नाम ए आलिंगपुक्खरे इ वा जाव मणीणं फासो [कं० ३३-४०] तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे पिच्छाघरमण्डवं विउव्वति अणेगखंभसयसंनिविट्ठं-वण्णओ-अन्तो बहुसमरमणिज्जं भूमिभागं उल्लोयं अक्खाडगं च मणिपेढियं च विउव्वति। तीसे णं मणिपेढियाए उवरि सीहासणं सपरिवारं जाव दामा चिट्ठन्ति [कं० ४१-४३]।

[५७] ¹तए णं से ²सूरियाभे देवे ³समणस्स भगवतो महावीरस्स ⁴आलोए ⁵पणामं करेति करित्ता ⁶'अणुजाणउ मे भगवं' ति कट्टु ⁷सीहासणवरगए ⁸तित्थयराभिमुहे ⁹संणिसण्णे। ¹⁰तए णं से ¹¹सूरियाभे देवे ¹²तप्पढमयाए

---

सन् सूर्याभो देवः श्रमणं भगवन्तं महावीरं वन्दते-स्तौति नमस्यति कायेन वन्दित्वा नमस्यित्वा च 'उत्तरपुरत्थिमं'......इत्यादि [पृ० ५६ पं० ११-] सुगमम्। नवरम्-बहुसमभूमिवर्णनम् प्रेक्षागृहमण्डपवर्णनम् मणिपीठिका-सिंहासन-तदुपरि उल्लोच-अङ्कुश-मुक्तादामवर्णनानि प्राग्वत् [पृ० ९४ पं० ७-पृ० १०२ पं० ७] भावनीयानि

[५७] १ ततः २सूर्याभो देवः ३ तीर्थङ्करस्य भगवतः ४आलोके ५ प्रणामं करोति कृत्वा च ६ 'अनुजानातु भगवान् माम्' इति अनुज्ञापनां कृत्वा ७ सिंहासनवरगतः सन् ८ तीर्थकराभिमुखः सन्निषण्णः। ९ ततः १० सूर्याभो देवः ११ तत्प्रथमतया-तस्य ना-

५

१०

[12]नानामणि-कणग-रयणविमलमहरिहनिउणओवियमिसिमिसिंतविरतियमहाभरणकडग-तुडियवरभूसणुज्जलं पीवरं पलम्बं [13]दाहिणं भुयं [14]पसारेति [15]तओ णं [16]सरिसयाणं [17]सरित्तयाणं [18]सरिव्वयाणं [19]सरिसलावण्ण-रूव-जोव्वणगुणोववेयाणं [20]एगाभरण-वसणगहिअणिज्जोआणं

टयविधेः प्रथमतायाम् १३ दक्षिणं भुजं १४प्रसारयति कथंभूतम्? इत्याह-१२ नानाविधानि मणि-कनक-रत्नानि येषु तानि नानामणि-कनक-रत्नानि—मणयो नानाविधाश्चन्द्रकान्तादयः कनकानि नानाविधानि नानावर्णतया रत्नानि नानाविधानि कर्केतनादीनि तथा विमलानि-निर्मलानि तथा महान्तमुपभोक्तारमर्हन्ति यदि वा महम्-उत्सवम्-क्षणम् अर्हन्ति इति महार्हाणि तथा निपुणम् निपुणबुद्धिगम्यं यथा भवति एवं परिकर्मितानि दीप्यमानानि विरचितानि महाभरणानि यानि कटकानि-कलाचिकाभरणानि तुटितानि बाहुरक्षिकाः अन्यानि च यानि वरभूषणानि तैः उज्ज्वलं-भास्वरम् तथा पीवरं-स्थूलम् प्रलम्बं-दीर्घम्। १५ ततः तस्माद् दक्षिणभुजात् ३० अष्टशतं अष्टाधिकं शतं ३२ देवकुमाराणं ३३ निर्गच्छति कथंभूतानाम्? इत्याह-१६ सदृशानाम्-समानाकाराणाम् इत्यर्थः १७ तत्र आकारेण कस्यचित् सदृशोऽपि वर्णतः सदृशो न भवति ततः सदृग्वर्णत्वप्रतिपादनार्थमाह-सदृशी सदृग् वर्णत्वक् येषां ते तथा १८ सदृक्त्वग् अपि कश्चिद् वयसा विसदृशः संभाव्येत तत आह-सदृक् समानं वयो येषां ते तथा तेषाम् १९ सदृशेन लावण्येन-लवणिम्ना-अतिसुभगया शरीरकान्त्या इति भावः। रूपेण-आकृत्या यौवनेन-यौवनिकया गुणैः दक्षत्व-प्रियंवदत्वादिभिः उपपेताः सदृशलावण्य-रूप-यौवन-गुणोपपेताः तेषाम् २० एकः स×मानः आभरण-वसनलक्षणः गृहीतो

५

१०



–मानः आभरणवसनानि आ–पा० ५ मा० १–२।

दुहतो संवेल्लियग्गणियत्थाणं उप्पीलियचित्तपट्टपरियरसफेणकावत्तरइयसंगयपलंबवत्थंतचित्तचिल्लगनियंस-णाणं एगावलिकण्ठरइयसोभंतवच्छपरिहत्थभूसणाणं अट्ठसयं णट्टसज्जाणं देवकुमाराणं णिग्गच्छति।

[५८] तयणंतरं च णं नानामणि० [पृ० १२३ पं०१] जाव पीवरं पलंबं वामं भुयं पसारेति तओ णं सरिसयाणं

नियोगः उपकरणम्–अर्थात् नाट्योपकरणं यैस्ते तथा तेषाम् २१ द्विघातो द्वयोः पार्श्वयोः संवेल्लितानि संवृतानि अग्राणि यस्य तद् द्विघातःसंवेल्लिताग्रं न्यस्तम्–सामर्थ्याद् उत्तरीयं यैस्ते तथा तेषाम् तथा २२ उत्पीडितः अत्यन्ताऽऽबद्धः चित्रपट्टो विचित्रवर्णपट्टरूपः परिकरो यैस्ते तथा २३ यस्मिन् आवर्तने फेनविनिर्गमो भवति स सफेनकावर्त उच्यते ततः २४ सफेनकावर्तेन रचिताः–संगताः–नाट्यविधौ उपपन्नाः प्रलम्बा वस्त्रान्ता यस्य निवसनस्य तत् तथा तत् २५ चित्रम्–चित्रवर्णम् २६ चिल्लगं देदीप्यमानं २७ निव-सनं परिधानं येषां ते तथा+ तेषाम् २८ एकावलिर्या कण्ठे रचिता तया शोभमानं वक्षो येषां ते तथा २९ ÷'परिहत्थ' शब्दो देश्यः परिपूर्णवाची पडिहत्थानि पूर्णानि भूषणानि येषां ते तथा⊕ तेषाम् ३१ नृत्ये सज्जाः प्रगुणीभूताः नृत्यसज्जाः तेषाम्।

[५८] १ तदनन्तरं च २ यथोक्तविशेषणविशिष्टं ३ वामं भुजं ४ प्रसारयति ५ तस्माद् वामभुजात् १०अष्टशतं ११देवकुमारि-काणां १२विनिर्गच्छति कथंभूतम्? इत्याह–६'सरिसयाणं सरित्तयाणं...वसणगहियनिज्जोईणं...संवेल्लियग्गनियत्थीणं' इति पूर्ववत्



+ "ततः पूर्वपदेन कर्मधारयः"–राय० वि०। ÷ "पुण्णम्मि पडिहत्थ-पोणियया" "पडिहत्थो तथा पोणिओ पूर्णः"–देशीनाममाला व० ६ गा० २८। अत्र डकार–रकारयोः साम्येन 'पडिहत्थ'वत् 'परिहत्थ' शब्दोऽपि बोध्यः। ⊕ "ततः पूर्वपदेन कर्मधारयः"–राय० वि०।

रायपसेण-
इयं।

सरित्तयाणं सरिव्वयाणं सरिसलावण्ण–रूव–जोव्वणगुणोववेयाणं एगाभरग० दुहतो संवेल्लियग्ग० [पृ० ४१२ पं० १] आविद्धतिलयामेलाणं पिणद्धगेवेज्जकंचुतीणं नानामणि–रयणभूसणविराइयंगमंगाणं चंदाणणाणं चंदद्ध-समनिलाडाणं चंदाहियसोमदंसणाणं उक्का इव उज्जोवेमाणीणं सिंगारा० हसिय–भणिय० [पृ० २९ पं० १] गहियाउज्जाणं अट्ठसयं नट्टसज्जाणं देवकुमारियाणं णिग्गच्छइ।

[५९] तए णं से[1] सूरियाभे देवे[3] अट्ठसयं संखाणं विउव्वति अट्ठसयं संखवायाणं विउव्वइ, [4] अ० सिंगाणं

॥१२५॥

[पृ० १२३ पं० ९] ७ आविद्धः तिलकः *आमेलश्च–शेखरको यकाभिस्ता आविद्धतिलकामेलाः तासाम् ८ पिनद्धं ग्रैवेयकं ग्रीवाभरणं कञ्चुकश्च यकाभिस्तास्तथा तासाम् ९ नानाविधानि मणि–कनक–रत्नानि येषु भूषणेषु तानि नानामणि–कनक–रत्नानि तैर्नानामणि–कनक–रत्नैर्भूषणैर्विराजितानि अङ्गमङ्गानि अङ्गप्रत्यङ्गानि यासां तास्तथा तासाम् ○'चंदाणणाणं...उक्का इव उज्जोवेमाणीणं' इति सुगमम्। सिंगारा० हसिय–भणिय० [पृ० २९ पं० ४] =गहियाउज्जाणं नट्टसज्जाणं' इति पूर्ववत् [पृ० १२४ पं० ९]।

[५९] १ ततः २ सूर्याभो देवः ३ अष्टशतं शङ्खानां विकुर्वति ४ अष्टशतं शङ्खवादकानाम्, ५ ⊖अ० शृङ्गाणाम् १०

४ 'अ' पदेन 'अट्ठसयं' अवगन्तव्यम्। * 'आमेल' शब्दः प्राकृतभाषायां व्यवह्रियते, संस्कृते तु तदर्थवाची 'आपीड' शब्दः प्रसिद्धः। आचार्यहेमचन्द्रः प्राकृतम् 'आमेल' शब्दं संस्कृत 'आपीड' शब्दस्य विकृतोच्चारणं सूचयति। [८–१–२३४ हैमश०] 'आपीड–आवीड–आवेड–आमेल' इति च तत्परिवर्तनक्रमः प्रतिभाति। ○चन्द्राननानाम् चन्द्रार्धसमललाटानाम् चन्द्राधिकसोमदर्शनानाम् उल्का इव उद्योतमानानाम्। = गृहीतातोद्यानाम्। ⊖ 'अ' पदेन 'अष्टशतम्'।

रायपसेणइयं।

॥१२६॥

⊙वि० अ० सिंगवायाणं वि०, अ० संखियाणं वि० अ० संखियवायाणं वि०, अ० खरमुहीणं वि० अं० खरमुहिवायाणं वि०, अ० पेयाणं वि० अ० पेयावायगाणं वि०, अ० पीरिपीरियाणं वि० अ० पीरिपीरियावायगाणं

अनेकविधवाद्यानि

६ अ० शृङ्गवादकानाम्, ७ अ० शङ्खिकानाम् ८अ० शङ्खिकावादकानाम् ह्रस्वः शङ्खो जात्यन्तरात्मकः शङ्खिका तस्या हि स्वरो मनाक् तीक्ष्णो भवति न तु शङ्खवद् अतिगम्भीरः तथा ९ अ० खरमुखीनाम्—काहलानाम् १० अ० खरमुखीवादकानाम् ११ अ० पेयानाम् 'पेया' नाम महती काहला १२अ० पेयावादकानाम्, १३ अ० 8पिरिपिरिकाणाम्—कोलिकपुटावनद्धमुखवाद्यविशेषरूपाणाम् १४ अ० पिरिपिरिका⊖वा०, अ० पणवानाम् पणवो भाण्डपटहः लघुपटहो वा अ० पणववा०, अ० पटहानाम् अ० पटहवा०, अ० भम्भानाम् भम्भा ढक्का अ० भम्भावा०, अ० होरम्भाणाम् होरम्भा महाढक्का अ० होरम्भावा०, अ० भेरीणाम्—ढक्काकृतिवाद्यविशेषरूपाणाम् अ० भेरीवा०, अ० झल्लरीणाम् 'झल्लरी' नाम चर्मावनद्धा विस्तीर्णवलयाकारा अ० झल्लरीवा०, अ० दुन्दुभीनाम् अ० दुन्दुभिवा० दुन्दुभिः—भेर्याकारा संकटमुखी देवातोद्यविशेषः, अ० मुरुजानाम् महाप्रमाणो मर्दलो मुरुजः अ० मुरुजवा०, अ० मृदङ्गानाम् लघुमर्दलो मृदङ्गः अ० मृदङ्गवा०, अ० नन्दीमृदङ्गानाम्—नन्दीमृदङ्गो नाम एकतः संकीर्णः अन्यत्र विस्तृतो मुरजविशेषः अ० नन्दीमृदङ्गवा०, अ० आलिङ्गानाम् आलिङ्गो मुरजवाद्यविशेष एव अ० आलिङ्गवा०, अ० कुस्तुम्बानाम् कुस्तुम्बः—चर्मावनद्धपुटो वाद्यविशेषः अ० कुस्तुम्बवा०, अ० गोमुखीनाम् गोमुखी लोकतोऽवसेया अ० गोमुखीवा०, अ० मर्दलानाम् मर्दलः—उभयतः समः अ०

५

१०

⊙ 'वि' पदेन 'विउव्वति' संबोध्यम्। 8 प्रस्तुते मूलपाठे 'पिरिपिरिका' पर्यन्तं वाद्यनामानि दृश्यन्ते, अन्यानि—यानि विवरणकारेण सूचितानि तानि अग्रतने मूलपाठे लभ्यन्ते। ⊖ 'वा' पदेन 'वादकानाम्' ज्ञेयम्।

मर्दलवा०, अ० विपञ्चीनाम् विपञ्ची त्रितन्त्री वीणा अ० विपञ्चीवा०, अ० वल्लकीनाम् वल्लकी सामान्यतो वीणा अ० वल्लकीवा०,
अ० भ्रामरीणाम् अ० भ्रामरीवा०, अ० षड्भ्रामरीणाम् अ० षड्भ्रामरीवा०, अ० परवादनीनाम् परवादनी सप्ततन्त्री वीणा अ०
परवादनीवा०, अ० बव्वीसानाम् अ० बव्वीसावा०, अ० सुघोषाणाम् अ० सुघोषावा०, अ० नन्दिघोषाणाम् अ० नन्दिघोषवा०, अ०
महतीनाम् महती–शततन्त्रिका वीणा अ० महतीवा०, अ० कच्छभीनाम् अ० कच्छभीवा०, अ० चित्रवीणानाम् अ० चित्रवीणावा०,
अ० आमोदानाम् अ० आमोदवा०, *अ० झञ्झानाम् अ० झञ्झावा०, अ० नकुलानाम् अ० नकुलवा०, अ० तूणानाम् अ० तूणावा०, ५
अ० तुम्बवीणानाम्–तुम्बयुक्ता वीणा या अद्यकल्ये प्रसिद्धा अ० तुम्बवीणावा०, अ० मुकुन्दानाम् मुकुन्दो मुरजवाद्यविशेषो यः अति-
लीनं प्रायो वाद्यते अ० मुकुन्दवा०, अ० हुडुक्कानाम् अ० हुडुक्कावा०, हुडुक्का प्रतीता, अ० =विचिकीनाम् अ० विचिकीवा०,
अ० करटीनाम् अ० करटीवा० करटी प्रतीता, अ० डिण्डिमानाम् अ० डिण्डिमवा० प्रथमं प्रस्तावनासूचकः पणवविशेषः डिण्डिमः,
अ० किणितानाम् अ० किणितवा०, अ० +कडवानाम् अ० कडवावा०, कडवा करटिका, अ० दर्दरकाणाम् अ० दर्दरवा० दर्दरकः
प्रतीतः, अ० दर्दरिकाणाम् अ० दर्दरिकावा० लघुदर्दरको दर्दरिका, अ० कुस्तुम्बराणाम् अ० कुस्तुम्बरवा०, अ० कलशिकानाम् अ० १०
कलशिकावा०, अ० तालानाम् अ० तालवा०, अ० कांस्यतालानाम् अ० कांस्यतालवा०, अ० रिंगिसिकानाम् अ० रिंगिसिकावा०,



* अ० डण्डानाम् अ० डण्डावा०–पा० ४–५। अ० दण्डानाम् अ० दण्डावा०–भा० १। =विविक्कीनाम् अ० विवकीवा०–भा० १।
विचिकीनाम् अ० विचिकीना०–पा० ४। + अ० कंडकानाम् अ० कंडकावा० अ० कंडवानाम् अ० कंडकानाम् कंडवा करटिका–भा० २।

वि० =एवमाइयाइं एगूणपण्णं आउज्जविहाणाइं विउव्वइ।

[६०] तए णं 'ते बहवे देवकुमारा य देवकुमारियाओ य सद्दावेति। तए णं ते बहवे देवकुमारा य देवकुमारीओ य सूरियाभेणं देवेणं सद्दाविया समाणा हट्ठ जाव-[पृ० ४७ पं० ३] जेणेव सूरियाभे देवे तेणेव उवागच्छंति तेणेव उवागच्छित्ता सूरियाभं देवं करयलपरिग्गहियं [पृ० ६७ पं० ८] जाव वद्धावित्ता

⌐अ० मगरिकाणाम् अ० मगरिकावा०, ○अ० शिशुमारिकाणाम् अ० शिशुमारिकावा०, अ० वंशानाम् अ० वंशवा०, अ० वालीनाम् अ० वालीवा०, वाली तूणविशेषः, स हि मुखे दत्त्वा वाद्यते, अ० वेणूनाम् अ० वेणुवा०, अ० परिलीनाम् अ० परिलीवा०, अ० बद्धकानाम् अ० बद्धकवा० बद्धकः ⊖तूणविशेषः। अव्याख्यातास्तु भेदा लोकतः प्रत्येतव्याः १५ एवमादीनि बहूनि आतोद्यानि आतोद्यवादकांश्च विकुर्वति, सर्वसंख्यया तु मूल-भेदापेक्षया आतोद्यभेदा एकोनपञ्चाशत् शेषास्तु भेदा एतेषु एव अन्तर्भवन्ति यथा वंशातोद्यविधाने वाली-वेणु-पिरली-बद्धगा इति। ५

[६०] विकुर्वित्वा च १तान् स्वयंविकुर्वितान् देवकुमारान् देवकुमारिकाश्च २शब्दयति ते च ३शब्दिता हृष्टतुष्टानन्दितचित्ताः सूर्याभसमीपम् आगच्छन्ति आगत्य च ४करतलपरिगृहीतं दशनखं शिरसावर्तं च मस्तके अञ्जलिं कृत्वा जयेन विजयेन वर्धापयित्वा १०

= एवमादिकानि एकोनपञ्चाशद् आतोद्यविधानानि विकुर्वति। ⌐अ० अगरिकाणाम् अ० अगरिकावा०-भा० २। ○ अ० सिसुकुमारिकानाम् अ० शिसुकुमारिकवा०-भा० २। अ० शुशुमारिकानाम् शुशुमारिकावा०- पा० ५। ⊖तूणवि०-मु० पु०। अत्र वाद्यविशेषनाम्नां प्रस्तावे बहूनि वाद्यनामानि अप्रतीतानि अत एव च तेषां नामसु अनेकविधः पाठभेदो दृश्यते।

रायपसेण-
इयं।

[11]अहेपन्नगद्धरूवा [12]पन्नगद्धसंठाणसंठिया [13]सव्ववयरामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा [14]महया महया [15]गयदंतसमाणा [16]पन्नत्ता [17]समणाउसो!। [18]तेसु णं णागदंतएसु [19]बहवे किण्हसुत्तबद्धा [20]वग्घारितमल्लदामकलावा [21]णील० लोहित० हालिद्द० सुक्किलसुत्तबद्धा वग्घारितमल्लदामकलावा, [22]ते णं दामा [23]तवणिज्जलंबूसगा [24]सुवण्ण-पयरगमंडिया [25]णाणाविहमणिरयणविविहहारउवसोभियसमुदया [26]जाव सिरीए अईव अईव उवसोभेमाणा

११ अधः-अधस्तनं यत् पन्नगस्य सर्पस्यार्धं तस्येव रूपम्-आकारो येषां ते अधःपन्नगार्धरूपाः-अधःपन्नगार्द्धवदतिसरला दीर्घाश्चेति भावः, एतदेव व्याचष्टे-१२ पन्नगार्द्धसंस्थानसंस्थिताः अधःपन्नगार्द्धसंस्थानाः १३ सर्वात्मना वज्रमयाः 'अच्छा' इत्यारभ्य 'जाव-पडिरूवा' इति विशेषणजातं प्राग्वत् [पृ० १९ पं० ८] १४ अतिशयेन महान्तो १५ गजदन्तसमानाः-गजदन्ताकाराः १६ प्रज्ञप्ताः हे १७ श्रमण! हे आयुष्मन्!। १८ तेषु नागदन्तेषु १९ बहवः कृष्णसूत्रबद्धाः २० 'वग्घारिय' इति अवलम्बिता माल्यदामकलापाः-पुष्पमालासमूहाः २१ बहवो नीलसूत्रावलम्बितमाल्यदामकलापाः एवं लोहित-हारिद्र-शुक्लसूत्रबद्धा अपि वाच्याः। २२ तानि दामानि २३ तपनीयः-तपनीयमयो लम्बूसगो-दाम्नामग्रिमभागे मण्डनविशेषो येषां तानि तपनीयलम्बूसकानि, पार्श्वतः सामस्त्येन २४ सुवर्ण÷प्रतरेण-सुवर्णपत्रकेण मण्डितानि सुवर्णप्रतरमण्डितानि २५ नानारूपाणां मणीनां रत्नानां च ये विविधा-विचित्रवर्णा हाराः-अष्टादशसरिकाः अर्द्धहारा-नव=सरिकास्तैरुपशोभितः समुदायो येषां तानि तथा। २६ 'जाव सिरीए अईव अईव उवसोभेमाणा चिट्ठंति' इति अत्र 'यावत्' करणादेवं परिपूर्णः पाठो द्रष्टव्यः-'ईसिं अण्णमण्णमसंपत्ता......[पृ० १०१ पं० २] सव्वओ समंता आपूरेमाणा आपू-

५

१०



प्रतिभाति ?। 'अंकोडा' इति भाषायाम्। ÷ भाषायाम् 'पतरुं' इति। = भाषायाम् 'नवसरो हार' इति।

चिट्ठंति। तेसिं[31] णं णागदंताणं उवरिं अन्नाओ सोलस सोलस नागदंतपरिवाडीओ पन्नत्ता [32]ते णं णागदंता तं चेव जाव गयदंतसमाणा पन्नत्ता [33]समणाउसो! तेसु[31] णं णागदंतएसु [32]बहवे रययामया सिक्कगा पन्नत्ता, तेसु[34] णं रययामएसु सिक्कएसु [35]बहवे वेरुलियामईओ धूवघडीओ पं० ताओ णं धूवघडीओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामाओ सुगंधवरगंधियातो गंधवट्टिभूयाओ ओरालेणं मणुण्णेणं मणहरेणं घाणमणिव्वुइकरेणं गंधेणं ते पदेसे सव्वओ समंता आपूरेमाणा आपूरेमाणा [पृ० १०२ पं० १-२] जाव चिट्ठंति। ५

[१०१]तेसिं णं दाराणं उभओ पासे [3]दुहओ णिसीहियाए [4]सोलस सोलस सालभंजियापरिवाडिओ पन्नत्ताओ,

---

रेमाणा सिरीए अईव अईव उवसोभेमाणा चिट्ठंति' एतच्च प्रागेव [पृ० १०१ पं० ६] यानविमानवर्णने व्याख्यातमिति न भूयो व्याख्यायते। २७ तेषां नागदन्तकानामुपरि प्रत्येकम्-२८अन्याः षोडश षोडश नागदन्तपरिपाट्यः प्रज्ञप्ताः २९ ते च नागदन्ताः 'यावत्' करणात् 'मुत्ताजालंतरुसियहेमजाल...इत्यादि [पृ० १६२ पं० ३] प्रागुक्तं सर्वं द्रष्टव्यं यावत्-गजदन्तसमानाः प्रज्ञप्ताः हे ३०श्रमण! हे आयुष्मन्!। ३१ तेषु नागदन्तेषु ३२ बहूनि रजतमयानि ३३ सिक[4]कानि प्रज्ञप्तानि, ३४ तेषु च रजतमयेषु सिककेषु ३५ बह्व्यो वैडूर्यमय्यो-वैडूर्यरत्नात्मिका ३६ धूपघटिकाः 'कालागुरु'......इत्यादि प्राग्वत् [पृ० ८ पं० २] नवरम्-३७घ्राणेन्द्रिय-मनोनिर्वृतिकरेण। १०

[१०१] १ तेषां द्वाराणां प्रत्येकम्-२ उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन ३ द्विधातो-द्विप्रकारायां नैषेधिक्यां ४ षोडश

---

४ यस्योपरि दध्यादिभाण्डानि स्थाप्यन्ते तद् भाषायाम् 'शीकुं वा छीकुं' इति प्रसिद्धम्।

ताओ णं सालभंजियाओ [6]लीलट्ठियाओ [7]सुपइट्ठियाओ [8]सुअलंकियाओ [9]णाणाविहरागवसणाओ [10]णाणामल्लपिण-
द्धाओ [11]मुट्ठिगिज्झसुमज्झाओ [12]आमेलगजमलजुयलवट्टियअब्भुन्नयपीणरइयसंठियपीवरपओहराओ [13]रत्तावंगाओ
[14]असियकेसीओ [15]मिउविसयपसत्थलक्खणसंवेल्लियग्गसिरयाओ ईसिं[16] असोगवरपायवसमुट्ठियाओ [17]वामहत्थ-

षोडश शालभञ्जिकापरिपाटयः प्रज्ञप्ताः, ५ ताश्च शालभञ्जिका ६ लीलया–ललिताङ्गनिवेशरूपया स्थिताः लीलास्थिताः, ७ सुष्ठु-
मनोज्ञतया प्रतिष्ठिताः सुप्रतिष्ठिताः ८सुष्ठु–अतिशयेन रमणीयतया अलङ्कृताः स्वलङ्कृताः ९नानाविधो–नानाप्रकारो रागो येषां तानि
नानाविधरागाणि तानि वसनानि–वस्त्राणि यासां तास्तथा १० नानारूपाणि माल्यानि–पुष्पाणि पिनद्धानि–आविद्धानि यासां ता
नानामाल्यपिनद्धाः,* ११ मुष्टिग्राह्यं सुष्ठु–शोभनं मध्यं मध्यभागो यासां तास्तथा, १२ पीनं–पीवरं रचितं संस्थितं–संस्थानं यकाभ्यां
तौ पीनरचितसंस्थानौ आमेलकः–आपीडः–शेखरकः इत्यर्थः तस्य यमलयुगलं–समश्रेणिकं यद् युगलं तद्वत् वर्त्तितौ बद्धस्वभावौ–
उपचितकठिनभावाविति भावः–अभ्युन्नतौ पीनरचितसंस्थानौ च पयोधरौ यासां तास्तथा, १३ रक्तोऽपाङ्गो–नयनोपान्तरूपो यासां
तास्तथा, १४ असिताः–कृष्णाः केशा यासां ता असितकेश्यः, एतदेव सविशेषमाचष्टे–१५ मृदवः–कोमलाः विशदा निर्मलाः प्रश-
स्तानि–शोभनानि अस्फुटिताग्रत्वप्रभृतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः संवेल्लितं–संवृतम् अग्रं येषां ते संवेल्लिताग्राः शिरोजाः–
केशा यासां ता मृदुविशदप्रशस्तलक्षणसंवेल्लिताग्रशिरोजाः, १६ ईषत्–मनाक् अशोकवरपादपे समुपस्थिताः–आश्रिता ईषदशोकवरपाद-
पसमुपस्थिताः तथा १७ वामहस्तेन गृहीतमग्रं शालायाः–शाखायाः अर्थादशोकपादपस्य यकाभिस्ता वामहस्तगृहीताग्रशालाः

५

१०



* "क्तान्तस्य परनिपातः सुखादिदर्शनात्"–राय० वि० [पृ०४८ टिप्पण *।

रायपसेणइयं।

॥१६६॥

ग्गहियग्गसालाओ ईसिं अद्धच्छिकडक्खचिट्ठिएणं लूसमाणीओ विव चक्खुल्लोयणलेसेहि य अन्नमन्नं खिज्जमाणीओ विव पुढविपरिणामाओ सासयभावमुवगयाओ चन्दाणणाओ चंदविलासिणीओ चंदद्धसमणिडालाओ चंदाहियसोमदंसणाओ उक्का विव उज्जोवेमाणाओ विज्जुघणमिरियसूरदिप्पंततेयअहिययरसन्निकासाओ सिंगारागारचारुवेसाओ पासाइयाओ जाव [पृ० ११ पं० १२] चिट्ठंति।

[१०२] तेसिं णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस सोलस

५

१८ईषत्-मनाक् अर्ध-तिर्यग् वलितम् अक्षि येषु कटाक्षरूपेषु चेष्टितेषु तैः १९मुष्णन्त्य इव सुरजनानां मनांसि २०अन्योऽन्यं परस्परम् चक्षुषां लोकनेन-आलोकनेन ये लेशाः-संश्लेषास्तैः खिद्यमाना इव किमुक्तं भवति ? एवं नाम तास्तिर्यग्वलिताक्षिकटाक्षैः परस्परमवलोकमाना अवतिष्ठन्ति यथा नूनं परस्परं सौभाग्यासहनतस्तिर्यग्वलिताक्षिकटाक्षैः परस्परं खिद्यन्ति इवेति, २१ पृथिवीपरिणामरूपाः २२ शाश्वतभावमुपगता विमानवत् २३ चन्द्र इवाननं मुखं-यासां तास्तथा २४ चन्द्रवत् मनोहरं विलसन्तीत्येवंशीलाश्चन्द्रविलासिन्यः २५ चन्द्रार्द्धसमम्-अष्टमीचन्द्रसमानं ललाटं यासां तास्तथा २६ चन्द्रादपि अधिकं सोमं-सुभगकान्तिमत् दर्शनम्-आकारो यासां तास्तथा २७ उल्का इव उद्द्योतमानाः २८ विद्युतो ये घनाः-बहलतरा मरीचयस्तेभ्यो यच्च सूर्यस्य दीप्यमानं दप्तं-तेजस्तस्मादपि अधिकतरः सन्निकाशः-प्रकाशो यासां तास्तथा, '२९ सिंगारागारचारुवेसाओ...अभिरूवाओ चिट्ठंति' इति प्राग्वत् [पृ० ११ पं० १२ ]।

१०

[१०२] १ तेषां द्वाराणां प्रत्येकम्-२ उभयोः ३ पार्श्वयोरेकैकनैषेधिकीभावेन या ४ द्विधा नैषेधिकी तस्यां ५ षोडश षोडश

जालकडगपरिवाडीओ पन्नत्ता, ते णं जालकडगा सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा ।

[१०३] तेसिं णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस सोलस घंटापरिवाडीओ पन्नत्ता, तासिं णं घंटाणं इमेयारूवे वन्नावासे पन्नत्ते, तंजहा–जंबूणयामईओ घंटाओ वयरामयाओ लालाओ णाणामणिमया घंटापासा तवणिज्जामइयाओ संखलाओ रययामयाओ रज्जूतो। ताओ णं घंटाओ ओहस्सराओ मेहस्सराओ हंसस्सराओ कुंचस्सराओ सीहस्सराओ दुंदुहिस्सराओ णंदिस्सराओ णंदिघोसाओ मंजुस्सराओ मंजुघोसाओ

६ जालकटकाः प्रज्ञप्ताः, जालकटको–जालकाकीर्णो रम्यसंस्थानः प्रदेशविशेषः, ७ ते च जालकटकाः 'सव्वरयणामया...जाव पडिरूवा' इति [पृ० १९ पं० ८] प्राग्वत् ।

[१०३] १तेषां द्वाराणां प्रत्येकम्–२उभयोः ३ पार्श्वयोः ४द्विधातो नैषेधिक्यां ५षोडश षोडश ६घण्टापरिपाटयः प्रज्ञप्ताः, ७तासां च घण्टानामयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–८ जम्बूनदमय्यो घण्टाः ९ वज्रमय्यो लालाः १० नानामणिमया घण्टापार्श्वाः ११ तपनीयमय्यः शृङ्खलाः यासु ता अवलम्बितास्तिष्ठन्ति १२ रजतमय्यो रज्जवः १३ ताश्च घण्टाः १४ओघेन–प्रवाहेण स्वरो यासां ता ओघस्वराः १५ मेघस्येव अतिदीर्घः स्वरो यासां ता मेघस्वराः १६ हंसस्येव मधुरः स्वरो यासां ता हंसस्वराः, एवं १७ क्रौञ्चस्वराः १८ सिंहस्येव च प्रभूतदेशव्यापी स्वरो यासां ताः सिंहस्वराः एवं १९ दुन्दुभिस्वराः २० नन्दिस्वराः द्वादशविधतूर्यसङ्घातो नन्दिः २१ नन्दिवत् घोषो–ह्रादो यासां ता नन्दिघोषाः २२ मञ्जुः–प्रियः स्वरो यासां ता मञ्जुस्वराः, एवं २३मञ्जुघोषाः,

सुस्सराओ सुस्सरघोसाओ उरालेणं मणुन्नेणं मणहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पदेसे सव्वओ समंता आपूरेमाणाओ आपूरेमाणाओ जाव चिट्ठंति ।

[१०४]तेसिं णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस सोलस वणमालापरिवाडीओ पन्नत्ताओ, ताओ णं वणमालाओ णाणामणिमयदुमलयकिसलयपल्लवसमाउलाओ छप्पयपरिभुज्जमाणसोहंतसस्सिरीयाओ पासाईयाओ...[पृ० ११ पं० १२]।

[१०५] तेसिं णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस सोलस पगंठगा पन्नत्ता, ते णं पगंठगा



किंबहुना ? २४ सुस्वराः २५सुस्वरघोषाः, 'उरालेणं' इत्यादि [पृ० १०१ पं० ३ तथा ९] प्राग्वत् ।

[१०४] १ तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोः २ द्विधातो नैषेधिक्यां ३ षोडश षोडश ४ वनमालापरिपाट्यः प्रज्ञप्ताः, ५ ताश्च वनमालाः ६नानाद्रुमाणां नानालतानां च यानि किशलयानि ये च पल्लवास्तैः समाकुलाः—सम्मिश्राः ७ षट्पदैः परिभुज्यमानाः सत्यः शोभमानाः षट्पदपरिभुज्यमानशोभमानाः अत एव सश्रीकाः ८'पासाईयाओ'इत्यादि पदचतुष्टयं प्राग्वत्[पृ० ११ पं० १२]



[१०५] १ तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या २ द्विधा नैषेधिकी तस्यां ३ षोडश षोडश ४ प्रकण्ठकाः प्रज्ञप्ताः, प्रकण्ठको नाम पीठविशेषः, आह च जीवाभिगममूलटीकाकारः⊙:—"प्रकण्ठौ पीठविशेषौ [ ] इति, ५ ते च

⊙ जीवा० वि० प्र०पृ० २०९ पं० ४। "चूर्णिकारस्तु एवमाह—"आदर्शवृत्तो पर्यन्तावनतप्रदेशौ पीठौ प्रकण्ठौ" इति"—जीवा० वि० प्र० पृ० २०९ पं० ४।

अड्डाइज्जाइं जोयणसयाइं आयामविक्खंभेणं पणवीसं जोयणसयं बाहल्लेणं सव्ववयरामया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा। तेसिं णं पगंठगाणं उवरिं पत्तेयं पत्तेयं पासायवडेंसगा पन्नत्ता, तेणं पासायवडेंसगा अड्डाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं पणवीसं जोयणसयं विक्खंभेणं अब्भुग्गयमूसिअपहसिया विव विविहमणिरयणभत्तिचित्ता वाउद्धुयविजयवेजयंतपडागच्छत्ताइछत्तकलिया

मकण्ठकाः प्रत्येकम्–६ अर्द्धतृतीयानि योजनशतान्यायामविष्कम्भाभ्याम् ७ पञ्चविंशं–पञ्चविंशत्यधिकं योजनशतं बाहल्येन पिण्डभावेन ८ सर्वात्मना ते प्रकण्ठकाः वज्रमया–वज्ररत्नमयाः 'अच्छा सण्हा' इत्यादि विशेषणजातं [पृ० १९ पं० ८] प्राग्वत्। ९ तेषां मकण्ठकानां उपरि प्रत्येकं ○प्रत्येकं १० प्रासादावतंसकाः प्रज्ञप्ताः, प्रासादावतंसका नाम प्रासादविशेषाः, उक्तं च जीवाभिगममूलटीकायाम्–"=प्रासादावतंसकौ–प्रासादविशेषौ" [ ] इति, ११ ते च प्रासादावतंसकाः÷ १२ अर्धतृतीयानि योजनशतानि ऊर्ध्वम् उच्चैस्त्वेन १३ पञ्चविंशं योजनशतं विष्कम्भेन, १४ अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गता उत्सृताः–प्रबलतया सर्वासु दिक्षु मसृता या प्रभा तया सिता इव–बद्धा इव तिष्ठन्तीति गम्यते, अन्यथा कथमिव ते अत्युच्चा निरालम्बाः तिष्ठन्तीति भावः, १५ विविधाः–अनेकप्रकारा ये मणयः–चन्द्रकान्तादयो यानि च रत्नानि–कर्केतनादीनि तेषां भक्तिभिः–विच्छित्तिविशेषैश्चित्रा–नानारूपाः आश्चर्यवन्तो वा नानाविधमणिरत्नभक्तिचित्राः, १६ वातोद्धूता–वायुकम्पिताः विजयः–अभ्युदयस्तत्सूचिका वैजय-

○ "इह एकं प्रति 'प्रत्येकम्' इति आभिमुख्ये वर्तमानः 'प्रति' शब्दः समस्यते ततो वीप्साविवक्षायां द्विर्वचनम्"–राय० वि०। = जीवा० वि० प्र० पृ० २०९ पं० ७। ÷ का इति तृती–पा० ४–५।

५

१०

तुंगा[17] गगणतल[18]मणुलिहंतसिहरा जालंतर[19]रयण= पंजरु[20]म्मिलिय व्व मणिकणग[21]थूभियागा वियसियस[22]य-
वत्तपोंडरीयतिलगरयणद्धचंदचित्ता णा[23]णामणिदामालंकिया अंतो[24] बहिं च सण्हा तवणिज्ज[25]वालुयापत्थडा

न्त्यभिधाना याः पताका अथवा विजया इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः पताकास्ता एव विजयवर्जिता वैजयन्त्यः, छत्रातिच्छत्राणि–उपर्युपरि स्थितान्यातपत्राणि तैः कलिता वातोद्धूतविजयवैजयन्तीपताकाच्छत्रातिच्छत्र-कलिताः १७तुङ्गा–उच्चा उच्चैस्त्वेन–अर्द्धतृतीययोजनशतप्रमाणत्वात् अत एव १८गगनतलं–अम्बरतलम् +अनुलिखन्ति–अभिलङ्घयन्ति शिखराणि येषां ते तथा, १९ जालानि–जालकानि तानि च भवनभित्तिषु लोके प्रतीतानि, तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि येषु ते जालान्तर-रत्नाः, तथा २० ×पञ्जरात् उन्मीलिता इव–बहिष्कृता इव पञ्जरोन्मीलिता इव, यथा हि किल किमपि वस्तु पञ्जरात्–वंशादिमयाच्छादनविशेषात् बहिष्कृतम्–अत्यन्तमविनष्टच्छायत्वात् शोभते एवं तेऽपि प्रासादावतंसका इति भावः, तथा २१ मणि-कनकानि–मणिकनकमय्यः स्तूपिकाः–शिखराणि येषां ते मणिकनकस्तूपिकाः, तथा २२ विकसितानि यानि शतपत्राणि पुण्डरीकाणि च द्वारादौ 8 प्रतिकृतित्वेन स्थितानि तिलकरत्नानि–भित्त्यादिषु पुण्ड्रविशेषा अर्द्धचन्द्राश्च द्वारादिषु तैश्चित्राः–नानारूपा आश्चर्यभूता वा विकसितशतपत्रपुण्डरीकतिलकरत्नार्द्धचन्द्रचित्राः, तथा २३ नाना अनेकरूपाणि यानि मणिदामानि–मणिमयपुष्पमालाः तैः अलं-कृतानि शोभितानि नानामणिदामालंकृतानि≥ तथा २४ अन्तर्बहिश्च श्लक्ष्णा–मसृणाः, तथा २५ तपनीयं–सुवर्णविशेषस्तन्मय्या

५

१०

="सूत्रे विभक्तिलोपः प्राकृतत्वात् "–राय०वि० । सत्यां विभक्तौ 'जालंतररयणा' इति युक्तम् । + 'शतृ' प्रत्ययान्तं कृदन्तं प्रथमाबहुवचनम्। × भाषायाम् 'पांजरूं' इति। 8 प्रकृति–पा० ४ भा० १। प्रकृतत्वे–पा० ५। प्राकृतत्वे–भा० २। ≥ एतच्च विशेषणं मुद्रित एव पुस्तके।

रायपसेणइयं।

सुहफासा सस्सिरीयरूवा [पृ० १९ पं० ५] पासादीया दरिसणिज्जा जाव दामा [पृ० १०१ पं० १]।

[१०६] तेसिं णं दाराणं उभओ पासे सोलस सोलस तोरणा पन्नत्ता, णाणामणिमया णाणामणिमएसु खंभेसु उवणिविट्ठसन्निविट्ठा जाव पउमहत्थगा। तेसिं णं तोरणाणं पत्तेयं पुरओ दो दो सालभंजियाओ पन्नत्ताओ, जहा हेट्ठा तहेव। तेसिं णं तोरणाणं पुरओ नागदंता पन्नत्ता जहा हेट्ठा जाव दामा।

वालुकायाः प्रस्तटः–प्रस्तरो येषु ते तपनीयवालुकाप्रस्तटाः, २६ 'सुहफासा... पासाईया' इत्यादि प्राग्वत् [पृ० १९ पं० ८] तेषां च *प्रासादवतंसकानामन्तर्भूमिवर्णनम् [पृ० ९७ पं० २] उपर्युल्लोकवर्णनम् [पृ० ९७ पं० ३] सिंहासनवर्णनम् [पृ० ९८ पं० ३] उपरि = विजयदूष्यवर्णनम् [पृ० १०० पं० १—] वज्रांकुशवर्णनम् मुक्तादामवर्णनं च यथा प्राक् [पृ० १०० पं० ३–४] यानविमाने भावितं तथा भावनीयम्। ५ ॥१७१॥

[१०६] १ तेषां द्वाराणां प्रत्येकम् २उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां षोडश षोडश तोरणानि प्रज्ञप्तानि, तानि च तोरणानि ३ 'नानामणिमयानि' इत्यादि [पृ० ७९ पं० ३ तथा पं० ७] तोरणवर्णनं यानविमानमिव निरवशेषं भावनीयम्। ४ तेषां तोरणानां पुरतः प्रत्येकं ५ द्वे द्वे शालभञ्जिके, शालभञ्जिकावर्णनं प्राग्वत् [पृ० १६५ पं० १] ६ तेषां तोरणानां पुरतो द्वौ द्वौ नागदन्तकौ प्रज्ञप्तौ, तेषां च नागदन्तकानां वर्णनं यथाऽधस्तादनन्तरमुक्तं तथा वक्तव्यम् [पृ० १६२ पं० ३] १०

* 'अवतंसक'–वत् 'वसंतक'शब्दोऽपि साधुः–[३–२–१५६ हैमश०] = जीवा० वि० पृ० २१० पं० ६।

तेसिं णं तोरणाणं पुरओ दो दो हयसंघाडा गयसंघाडा नरसंघाडा किन्नरसंघाडा किंपुरिससंघाडा महोरग-संघाडा गंधव्वसंघाडा उसभसंघाडा सव्वरयणामया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा, एवं पंतीओ वीही मिहुणाइं। तेसिं णं तोरणाणं दो दो पउमलयाओ जाव [पृ० १८ पं० २-३] सामलयाओ णिच्चं

नवरमत्रोपरि नागदन्तका न वक्तव्या अभावात्। ७ तेषां तोरणानां पुरतो ८ द्वौ द्वौ हयसङ्घाटौ, ⊙सङ्घाटशब्दो युग्मवाची यथा 'साधुसङ्घाटः' इत्यत्र, ततो द्वे द्वे हययुग्मे इत्यर्थः, एवं ९ गज-नर-किन्नर-किंपुरुष-महोरग-गन्धर्व-वृषभसङ्घाटा अपि वाच्याः, एते च कथम्भूताः? इत्याह-'सव्वरयणामया अच्छा...'इत्यादि [पृ० १९ पं०८] प्राग्वत्। यथा चामीषां हयादीनामष्टानां सङ्घाटा उक्ताः १० तथा पङ्क्तयोऽपि वीथयोऽपि मिथुनकानि च वाच्यानि, तत्र सङ्घाटाः-समानलिङ्गयुग्म रूपाः पुष्पावकीर्णकाश्च, एकदिग्व्यवस्थिता श्रेणिः-पङ्क्तिः, उभयोः पार्श्वयोः एकैकश्रेणिभावेन यत् श्रेणिद्वयं सा वीथिः, स्त्रीपुरुषयुग्मं मिथुनकम्। ११ तेषां तोरणानां पुरतो १२ द्वे द्वे पद्मलते 'यावत्' करणात् 'द्वे द्वे नागलते द्वे द्वे अशोकलते द्वे द्वे चम्पकलते द्वे द्वे चूतलते द्वे द्वे वासन्तीलते द्वे द्वे कुन्दलते द्वे द्वे अतिमुक्तकलते' [पृ० १८ पं० २-] इति परिगृह्यते, द्वे द्वे श्यामलते, एताश्च कथम्भूताः? इत्याह-'णिच्चं कुसुमियाओ' इत्यादि 'यावत्' करणात् 'निच्चं मउलियाओ [पृ० १८ पं० ४-] मञ्जरिवडिंसगधरीओ' इति परिगृह्यते, अस्य व्या-

⊙ हैमअनेकार्थकोशे 'संघाटिका' शब्दो युग्मवाची प्राप्यते-"संघाटिका तु कुट्टन्यां घ्राणे युग्मेऽम्बुकण्टके" का० ४ श्लो० ३८। "संघाडी जुयले" इति देशीनाममालावचनात् [व० ८ गा० ७] 'संघाडी' शब्दोऽपि युग्मपर्यायो बोध्यः। भाषायां तु 'संघाडो' इति। संस्कृते तु 'समूह'वाची 'संघात'शब्दः प्रतीतः।

रायपसेणइयं।

विमानद्वारतोरणवर्णनम्।

कुसुमियाओ [पृ० १८ पं० ४] सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा। तेसिं[3] णं तोरणाणं पुरओ [1]दो दो दिसासोवत्थिया पन्नत्ता सव्वे[2]रयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा। तेसि णं तोरणाणं पुरओ [1]दो दो चंदणकलसा पन्नत्ता, ते णं चंदणकलसा वरकमलपइट्ठाणा तहेव [पृ० १६१ पं० ४-]। तेसि णं तोरणाणं पुरतो [2]दो दो भिंगारा पन्नत्ता, ते णं भिंगारा वरकमलपइट्ठाणा जाव [पृ० १६१ पं० ४] महया मत्तगयमुहागितिसमाणा पन्नत्ता समणाउसो!। तेसिं णं तोरणाणं पुरओ [2]दो दो आयंसा पन्नत्ता, तेसिं णं आयंसाणं इमेयारूवे वन्नावासे पन्नत्ते, तंजहा- ५

॥१७२॥

ख्यानं प्राग्वत् [पृ० १८ पं० १०] पुनः कथम्भूताः? इत्याह-'सव्वरयणामया जाव'अत्रापि 'यावत्' करणात् 'अच्छा सण्हा'इत्यादिविशेषणसमूहपरिग्रहः, स च प्राग्वदेव [पृ० १९ पं० ८] भावनीयः, १३ तेषां तोरणानां पुरतः प्रत्येकं १४ द्वौ द्वौ दिक्सौवस्तिकौ-दिक्प्रोक्षकौ ते च सर्वे ⊙'जाम्बूनदमया' क्वचित् पाठः। १५'सव्वरयणामया...अच्छा'इत्यादि प्राग्वत् [पृ०१९ पं० ८] १६द्वौ द्वौ चन्दनकलशौ प्रज्ञप्तौ, वर्णकः-चन्दनकलशानां 'वरकमलपइट्ठाणा' इत्यादिरूपः [पृ०१६१ पं०१२] सर्वः प्राक्तनो वक्तव्यः, १७द्वौ द्वौ भृङ्गारौ, तेषामपि कलशानामिव वर्णको वक्तव्यः, [पृ० १६१ पं० १२] नवरं पर्यन्ते १८ 'महया मत्तगयमहामुहागिइसमाणा पन्नत्ता समणाउसो!'इति वक्तव्यम् मत्तो यो गजस्तस्य महत्-अतिविशालं यत् मुखं तस्याकृतिः-आकारस्तत्समानाः-तत्सदृशाः प्रज्ञप्ताः। १९ तेषां तोरणानां पुरतो २० द्वौ द्वावादर्शकौ प्रज्ञप्तौ, तेषां २१ चादर्शकानामयमेतद्रूपो वर्णावासो-वर्णकनिवेशः प्रज्ञप्तः तद्यथा- १०

⊙ विवरणकारदर्शितं पाठान्तरम्।

त[22]वणिज्जमया पगंठगा○-अंक[23]मैया मंडला [24]अणुग्घसितनिम्मलाते छायाते समणुबद्धा चंद[25]मंडलपडिणिकासा म[26]हैया महया अद्ध[27]कायसमाणा पन्नत्ता समणाउसो ! । तेसिं[28] णं तोरणाणं पुरओ दो दो[29] वइरनाभथाला पन्नत्ता अच्छ[30]तिच्छडियसालितंदुलणहसंदिट्ठपडिपुन्ना इव चिट्ठंति सव्वजंबू[31]णयमया जाव पडिरूवा म[32]हैया महया र[33]हच-क्कवालसमाणा पन्नत्ता समणाउसो ! ।

२२ तपनीयमयाः प्रकण्ठकाः-पीठविशेषाः, २३ अङ्कमयानि-अङ्करत्नमयानि मण्डलानि यत्र प्रतिबिम्बसम्भूतिः २४ अवघर्षणमव-÷घर्षितम् भूत्यादिना निर्मार्जनमित्यर्थः अवघर्षितस्याऽभावोऽनवघर्षितं तेन निर्मला अनवघर्षितनिर्मला तया छायया समनुबद्धा-युक्ताः २५ चन्द्रमण्डलसदृशाः २६ अतिशयेन महान्तः-२७ अर्द्धकायसमानाः-कायार्द्धप्रमाणाः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् ! । २८ तेषां तोरणानां पुरतो २९ द्वे द्वे वज्रनाभे वज्रमयो नाभिर्ययोस्ते वज्रनाभे स्थाले प्रज्ञप्ते-तानि च स्थालानि तिष्ठन्ति, ३० अच्छा निर्मलाः शुद्धस्फटिकवत् त्रिच्छटिताः त्रीन् वारान् ⊖छटिताः अत एव नखसन्दष्टाः नखाः-नखिकाः सन्दष्टा मुशलादिभिः त्रुटिता येषां ते तथा अच्छैस्त्रिच्छटितैः शालितन्दुलैर्नखसन्दष्टैः परि=पूर्णानीव ×पृथ्वीपरिणामरूपाणि तानि तथा केवलमेवमाकाराणी-त्युपमा, तथा चाह-३१ सर्वात्मना जम्बूनदमयानि 'अच्छा...सण्हा'इत्यादि प्राग्वत् [पृ० १९ पं०८] ३२ अतिशयेन महान्ति ३३ रथ-

○-गा वेरुलियमया सुरया वइरामया दोवारंगा नानामणिमया मंडला-वि० बा० । ÷ "भावे 'क्त' प्रत्ययः"-राय० वि० । ⊖ "सुखादि-दर्शनात् क्तान्तस्य परनिपातः"-राय० वि० । पृ० ४८ टिप्पण* । भाषायाम्-'छडेला चोखा' । = पूर्णानन पृथिवी-पा० ४-५ । भा० १ । × पृथिवीव पृथिवीप-भा० २ ।

रायपसेणइयं।

तेसिं[३४] णं तोरणाणं पुरओ [३५]दो दो पातीओ, ताओ[३६] णं पाईओ सच्छोदगपरिहत्थाओ[३७] ⊙णाणा[३८]विहस्स फलहरियगस्स≈ बहु पडिपुन्नाओ विव चिट्ठंति सव्वरयणामईओ अच्छा जाव [पृ० १९ पं० ५] पडिरूवाओ महंया[३९] महया गोकलिंजरचक्कसमाणीओ[४०] पन्नत्ताओ समणाउसो!। तेसिं[४१] णं तोरणाणं पुरओ [४२]दो दो सुपइट्ठा पन्नत्ता [४३]णाणा+विहभंडविरइया इव चिट्ठंति

चक्रसमानानि प्रज्ञप्तानि हे श्रमण ! हे आयुष्मन् ! । ३४ तेषां तोरणानां पुरतो ३५ द्वे द्वे पात्र्यौ प्रज्ञप्ते, ३६ ताश्च पात्र्यः ३७ स्वच्छपानीयपरिपूर्णाः ३८§नानाविधैः फलहरितैर्हरितफलैर्बहु–प्रभूतं प्रतिपूर्णा इव तिष्ठन्ति न खलु तानि फलानि किंतु तथारूपाः शाश्वतभावमुपागताः पृथ्वीपरिणामाः ततः उपमानमिति। 'सव्वरयणामईओ'इत्यादि प्राग्वत् [पृ० १९ पं० ८] ३९ अतिशयेन महत्यो ४० गोकलिञ्जरचक्रसमानाः प्रज्ञप्ताः हे श्रमण! हे आयुष्मन्!। ४१ तेषां तोरणानां पुरतो ४२ द्वौ सुप्रतिष्ठकौ–आधारविशेषौ प्रज्ञप्तौ, ते च सुप्रतिष्ठकाः सुसर्वौषधिप्रतिपूर्णाः [प्र० पृ० +टिप्पण] ४३नानाविधैः पञ्चवर्णैः प्रसाधनभाण्डैश्च बहुपरिपूर्णा इव तिष्ठन्ति, उपमाभावना ५

⊙ णाणामणिपंचवन्नस्स फल–वि० बा०। ≈ "अत्र षष्ठी तृतीयार्थे ∽बहुवचने च एकवचनं प्राकृतत्वात्"–राय० विव०। + अत्र मूलपाठ–विवरणकारलब्धपाठयोर्भेदः। अत्रैव स्थले जीवाजीवाभिगमसूत्रे "णाणाविधपसाहणगभंडविरचिया सव्वोसधिपडिपुण्णा" इति पाठो लभ्यते–पृ० २११ पं० ९। पाठश्चायं प्रस्तुतसूत्रविवरणानुसारी। § अस्य विवरणस्य मूलपाठः सर्वप्रतिषु मुद्रितपुस्तके च 'णाणाविहस्स फलहरियगस्स∽ बहुपडिपुन्नाओ विव' इत्येव दृश्यते तथापि मुद्रितपुस्तके विवरणे 'बहुपडिपुन्नेति चैकवचनं प्राकृतत्वात्' इति विलक्षणः पाठश्चिन्तनीयः। १०

∽'णाणाविहाणं फलहरियगाणं' इति बहुवचनं समुचितम् तथापि एतद् एकवचनं बहुवचनार्थे बोध्यम्।

सव्वरयणामया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा। तेसिं णं तोरणाणं पुरओ दो दो मणोगुलियाओ पन्नत्ताओ, तासु णं मणोगुलियासु बहवे सुवन्न-रूप्पमया फलगा पन्नत्ता, तेसु णं सुवन्नरूप्पमएसु फलगेसु बहवे वयरामया नागदंतया पन्नत्ता, तेसु णं वयरामएसु णागदंतएसु बहवे वयरामया सिक्कगा पन्नत्ता, तेसु णं वयरामएसु सिक्कगेसु किण्हसुत्तसिक्कगवच्छिता णीलसुत्तसिक्कगवच्छिया लोहियसुत्तसिक्कगवच्छिया हालिद्द-सुत्तसिक्कगवच्छिया सुक्किलसुत्तसिक्कगवच्छिया बहवे वायकरगा ५

प्राग्वत्, [पृ० १७५ पं० ६] ४४ 'सव्वरयणामया' इत्यादि तथैव [पृ० १९ पं० ५ तथा ८] ४५ तेषां तोरणानां पुरतो ४६ द्वे द्वे मनोगुलिके प्रज्ञप्ते मनोगुलिका नाम पीठिका, उक्तं च -जीवाभिगममूलटीकायाम्-"मनोगुलिका नाम पीठिका" [ ] इति। 8ताश्च मनोगुलिकाः सर्वात्मना वैडूर्यमय्यः 'अच्छा' इत्यादि प्राग्वत् [पृ० १९ पं० ५]। ४७ तासु मनोगुलिकासु ४८ सुवर्णमयानि रूप्यमयानि च फलकानि प्रज्ञप्तानि, ४९ तेषु सुवर्णरूप्यमयेषु फलकेषु बहवो ५० वज्रमया नागदन्तकाः-अङ्कुटकाः ५१ तेषु च नागदन्तकेषु ५२बहूनि =रजतमयानि सिक्कानि प्रज्ञप्तानि, ५३तेषु च रजतमयेषु सिक्ककेषु ५६बहवो वातकरका-जलशून्याः करकाः-इत्यर्थः-प्रज्ञप्ताः, तद्यथा-५४ ○गवच्छः-आच्छादनम् गवच्छाः सञ्जाता एष्विति गवच्छिताः कृष्णसूत्रैः-कृष्णसूत्रमयैर्गवच्छैरिति गम्यते, सिक्ककेषु गवच्छिताः कृष्णसूत्रसिक्ककगवच्छिता एवं ५५ नीलसूत्रसिक्ककगवच्छिताः' इत्याद्यपि भावनीयम्, ते च वातकरकाः १०

-जीवा० वि० पृ० २१३ पं० १२। 8 प्राप्तप्रतिमूलपाठे अस्य वाक्यस्य मूलपाठो न दृश्यते। अत्र स्थले मुद्रितजीवाजीवाभिगमसूत्रेऽपि एवमेव पृ० २११ पं० १०। =मूलपाठे वयरामय-वज्रमय-इति। ○ जीवाजीवाभिगमविवरणे 'गवत्थ' शब्दो लभ्यते-प्र० पृ० २१४ पं० ३।

पन्नत्ता ⁵⁶सव्ववेरुलियमया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा। तेसिं⁵⁸ णं तोरणाणं पुरओ ⁵⁹दो दो चित्ता रयण-करंडगा पन्नत्ता, से जहा णाम ए रन्नो चाउरंतचक्कवट्टिस्स चित्ते रयणकरंडए वेरुलियमणिफलिहपडलपच्चोयडे साते* पहाते ⁶⁹ते पतेसे सव्वतो समंता ओभासंति उज्जोवेति तवंति पभासति एवमेव ते वि चित्ता रयण-करंडगा साते पभाते ते पएसे सव्वओ समंता ओभासंति उज्जोवेंति तवंति पभासंति। तेसिं णं तोरणाणं पुरओ ⁷⁶दो दो हयकंठा गयकंठा नरकंठा किन्नरकंठा किंपुरिसकंठा महोरगकंठा गंधव्वकंठा उसभकंठा ५



५७ सर्वात्मना वैडूर्यमयाः 'अच्छा' इत्यादि प्राग्वत् [पृ० १९ पं० ८]। ५८ तेषां तोरणानां पुरतो ५९ द्वौ द्वौ चित्रौ-आश्चर्यभूतौ ६० रत्नकरण्डकौ प्रज्ञप्तौ, ६१ स यथा नाम ६२ राज्ञश्चतुरन्तचक्रवर्तिनः-चतुर्षु पूर्वापरदक्षिणोत्तररूपेषु अन्तेषु-पृथिवीपर्यन्तेषु चक्रेण वर्त्तितुं शीलं यस्य तस्य ६३ चित्रः-आश्चर्यभूतो नानामणिमयत्वेन नानावर्णो वा बाहुल्येन ६४ वैडूर्यमणिमयः ६५ स्फाटिकपटला-वच्छादितः ६६ स्वकया प्रभया ६७ तान् प्रत्यासन्नान् प्रदेशान् ६८सर्वतः सर्वासु दिक्षु ६९ समन्ततः-सामस्त्येन ७० अवभासयति एतदेव पर्यायत्रयेण व्याचष्टे-७१ उद्द्योतयति-७२ तापयति-७३ प्रभासयति ७४ 'एवमेव' इत्यादि सुगमम्। ७५ तेषां तोरणानां पुरतो ७६ द्वौ द्वौ हयकण्ठौ हयकण्ठप्रमाणौ रत्नविशेषौ एवं ७७ गज-नर-किन्नर-किम्पुरुष-महोरग-गन्धर्व-वृषभकण्ठा अपि वाच्याः, उक्तं च +जीवाभिगममूलटीकाकारेण-"हयकण्ठौ-हयकण्ठप्रमाणौ रत्नविशेषौ" [ ] एवं सर्वेऽपि कण्ठा वाच्या १०

* स्वया प्रभया। 'साते पहाते पतेसे' अत्र तकारबाहुल्यं पूर्वागतटिप्पणतः संगमनीयम् पृ० ८८ टिप्पण ×। + जीवा० वि० प्र० पृ० २१४ पं० ११।

सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा। *तेसिं णं तोरणाणं पुरओ दो दो पुप्फचंगेरीओ मल्लचंगेरीओ चुन्नचंगेरीओ गंधचंगेरीओ वत्थचंगेरीओ आभरणचंगेरीओ सिद्धत्थचंगेरीओ लोमहत्थचंगेरीओ पन्नत्ताओ सव्वरयणामयाओ अच्छाओ जाव [पृ० १९ पं० ५] पडिरूवाओ। ○तेसि णं तोरणाणं पुरओ दो दो पुप्फपडलगाइं [प्र० पृ० पं० २] जाव लोमहत्थपडलगाइं सव्वरयणामयाइं अच्छाइं जाव [पृ० १९ पं० ५] पडिरूवाइं। तेसिं णं तोरणाणं पुरओ दो दो सीहासणा पण्णत्ता। तेसिं णं सीहासणाणं वण्णओ जाव [पृ० ९८ पं० ३-पृ० १०२ पं० २] दामा। तेसिं णं तोरणाणं पुरओ दो दो रूप्पमया छत्ता पन्नत्ता, ते णं छत्ता वेरुलियविमलदंडा  ५

इति, तथा चाह-७८ सर्वे रत्नमया-रत्नविशेषरूपाः 'अच्छा' इत्यादि [पृ० १९ पं० ८] प्राग्वत्। ७९ तेषां तोरणानां पुरतो ८० द्वे =द्वे पुष्पचङ्गेर्यौ प्रज्ञप्ते एवं ८१ माल्य-चूर्ण-गन्ध-वस्त्र-आभरण-सिद्धार्थक-लोमहस्तचङ्गेर्योऽपि वक्तव्याः, एताश्च सर्वा अपि ८२ सर्वात्मना रत्नमय्यः। 'अच्छा' इत्यादि [पृ० १९ पं० ५] प्राग्वत्, एवं ८३ पुष्पादीनामष्टानां पटलकान्यपि द्विद्विसंख्याकानि वाच्यानि। ८४ तेषां तोरणानां पुरतो द्वे द्वे सिंहासने प्रज्ञप्ते, ८५ तेषां च सिंहासनानां वर्णकः प्रागुक्तो [पृ० ९८ पं० ३ तथा ९-पृ० १०२ पं० २] निरवशेषो वक्तव्यः, ८६ तेषां तोरणानां पुरतो ८७ द्वे द्वे छत्रे रूप्यमये प्रज्ञप्ते, ८८ तानि च छत्राणि ८९ वैडूर्य-  १०

* तेसु णं हयकंठएसु जाव उसभकंठएसु दो-वि० वा०। ○ तासु णं पुप्फचंगेरिआसु जाव लोमहत्थचंगेरीसु दो-वि० वा०। =द्वे चङ्गेर्यौ-पा० ४-५।

रायपसेण-
इयं।

जं[90]बूणंयकन्निया [91]वइरसंधी [92]मुत्ताजालपरिगया [93]अट्ठसहस्सवरकंचणसलागा दद्दर[94]मलयसुगंधिसव्वोउयसुरभिसी-
यलच्छाया मंगल[95]भत्तिचित्ता चंदा[96]गारोवमा। तेसिं[97] णं तोरणाणं पुरओ [98]दो दो चामराओ पन्नत्ताओ, [99]ताओ
णं चामरा+ओ चंद[100]प्पभवेरुलियवयरनानामणिरयणखचियचित्तदण्डाओ सुहु[101]मरययदीहवालातो सं[102]खंककुंदद-
गरयअमयमहियफेणपुंजसंन्निगासातो सव्वरयणामयाओ अच्छाओ [पृ० १९ पं ५] जाव पडिरूवाओ।

---

रत्नमयविमलदण्डानि ९० जाम्बूनदकर्णिकानि ९१ वज्रसन्धीनि–वज्ररत्नापूरितदण्डशलाकासन्धीनि ९२ मुक्ताजालपरिगतानि ९३ अष्टौ सहस्राणि–अष्टसहस्रसंख्या वरकाञ्चनशलाका–वरकाञ्चनमय्यः शलाका येषु तानि, तथा ९४दर्दरः–चीवरावनद्धं कुण्डिकादिभाजनमुखं तेन गलितास्तत्र पक्का वा ये मलया इति–मलयोद्भवं श्रीखण्डं तत्सम्बन्धिनः सुगन्धा ये गन्धवासास्तद्वत् सर्वेषु ऋतुषु सुरभिः शीतला च छाया येषां तानि तथा, ९५ अष्टानां स्वस्तिकादीनां मङ्गलानां भक्त्या–विच्छित्त्या चित्रम्–आलेखो येषां तानि तथा ९६ चन्द्राकारः–चन्द्राकृतिः सा उपमा येषां तानि तथा–चन्द्रमण्डलवत् वृत्तानीति भावः। ९७तेषां तोरणानां पुरतो ९८द्वे द्वे चामरे प्रज्ञप्ते, ९९ तानि च चामराणि १०० चन्द्रप्रभः–चन्द्रकान्तः वज्रं वैडूर्यं च प्रतीतं चन्द्रप्रभ–वज्र–वैडूर्याणि शेषाणि च नानामणिरत्नानि खचितानि येषु ते तथा एवंरूपाश्चित्रा–नानाकारा दण्डा येषां चामराणां तानि तथा, १०१ सूक्ष्मा रजतमया दीर्घा वाला येषां तानि तथा, १०२ शङ्खः प्रतीतः अङ्को–रत्नविशेषः कुन्द इति कुन्दपुष्पम् दकरज–उदककणाः अमृतमथितफेनपुञ्जः–क्षीरोदजलमथनसमुत्थः

५

१०



---

\+ –ओ णाणामणिकणगरयणविमलमहरिहतवणिज्जुज्जलविचित्तदंडाओ चिल्लियाओ सु–वि० बा०।

रायपसेणइयं।

॥१८०॥

तेसिं[3] णं तोरणाणं पुरओ "दो दो तेल्लसमुग्गा कोट्ठसमुग्गा पत्तसमुग्गा चोयगसमुग्गा तगरसमुग्गा एलासमुग्गा हरियालसमुग्गा हिंगुलयसमुग्गा मणोसिलासमुग्गा अंजणसमुग्गा सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा।

विमानद्वारध्वजवर्णनम्।

[१०७] सूरियाभे णं विमाणे एगमेगे दारे अट्ठसयं चक्कज्झयाणं अट्ठसयं मिगज्झयाणं गरुडज्झयाणं छत्तज्झयाणं पिच्छज्झयाणं सउणिज्झयाणं सीहज्झयाणं उसभज्झयाणं अट्ठसयं सेयाणं चउविसाणाणं नागवरकेऊणं ५

फेनपुञ्जस्तेषामिव सन्निकाशः-प्रभा येषां तानि तथा, 'अच्छा' इत्यादि प्राग्वत् [पृ० १९ पं० ८] १०३ तेषां तोरणानां पुरतो १०४ द्वौ द्वौ तैलसमुद्गकौ-सुगन्धितैलाधारविशेषौ, उक्तं च जीवाभिगममूल*टीकायाम्-"=तैलसमुद्गकौ सुगन्धितैलाधारौ" [ ] एवं १०५ कोष्ठादिसमुद्गका अपि वाच्याः, अत्र संग्रहणिगाथा-तेल्ले कोट्ठसमुग्गा पत्ते चोए य तगर एला य। हरियाले हिंगुलए मणोसिला अंजणसमुग्गा≈ ॥ एते सर्वेऽपि १०६ सर्वात्मना रत्नमयाः 'अच्छा' इत्यादि प्राग्वत् [पृ० १९ पं० ८]।

[१०७] १ तस्मिन् सूर्याभे विमाने २ एकैकस्मिन् द्वारे ३ अष्टाधिकं शतं ४चक्रध्वजानां-चक्रलेखरूपचिह्नोपेतानां ध्वजानाम् एवं ५ मृग-६ गरुड-७ रुद्धछत्र-८ पिच्छ-९ शकुनि-१० सिंह-११ वृषभ-१२ चतुर्दन्तहस्तिध्वजानामपि प्रत्येकमष्टशतमष्टशतं चक्र- १०

* -खटीकाकारः-भा० २। = जीवा० वि० पृ० २१४ पं० १४। ≈ एषा गाथाऽपि जीवा० वि० प्र० पृ० २१५ पं० १।

एवमेव[१३] संपुव्वावरेणं[१४] सूरियाभे[१५] विमाणे एगमेगे[१६] दारे असीयं[१७] असीयं केउसहस्सं[१८] भवति[१९] इति[२०] 8 मक्खायं[२१]*। तेसिं[२२] णं दाराणं एगमेगे[२३] दारे पण्णट्ठिं[२४] पण्णट्ठिं भोमा[२५] पन्नत्ता[२६], तेसिं[२७] णं भोमाणं भूमिभागा[२८] उल्लोया[२९] य भाणियव्वा, तेसिं[३०] णं भोमाणं च बहुमज्झदेसभागे[३१] पत्तेयं[३२] पत्तेयं सीहासणे[३३], सीहासणवन्नतो[३४] सपरिवारो, अवसेसेसु[३५] भोमेसु पत्तेयं[३६] पत्तेयं भद्दासणा पन्नत्ता। तेसिं[३७] णं दाराणं उत्तमागारा[३८] सोलसविहेहिं[३९] रयणेहिं उवसोभिया, तंजहा[४०]–

---

व्यम् १३ एवमेव–अनेनैव प्रकारेण १४ सपूर्वापरेण–सह पूर्वैः अपरैश्च वर्त्तते इति सपूर्वापरं–संख्यानं तेन १५ सूर्याभे विमाने १६ एकैकस्मिन् द्वारे १७ अशीतमशीतं–अशीत्यधिकं अशीत्यधिकं १८ केतुसहस्रं १९ भवति २०इति २१ आख्यातं मया अन्यैश्च तीर्थकृद्भिः। २२तेषां द्वाराणां सम्बन्धीनि २३ प्रत्येकं २४ पञ्चषष्टिः पञ्चषष्टिः २५भौमानि–विशिष्टानि स्थानानि २६प्रज्ञप्तानि, २७तेषां च भौमानां २८ भूमिभागा २९ उल्लोकाश्च यानविमानवद् वक्तव्याः, [पृ०८१ तथा ९७ पं० ३]३० तेषां च भौमानां ३१ बहुमध्यदेशभागे यानि त्रयस्त्रिंशत्तमानि भौमानि तेषां बहुमध्यदेशभागे ३२प्रत्येकं प्रत्येकं सूर्याभदेवयोग्यं ३३सिंहासनम् ३४तेषां च सिंहासनानां वर्णकोऽपरोत्तरपूर्वादिषु सामानिकादिदेवयोग्यानि भद्रासनानि च क्रमेण यानविमानवद् वक्तव्यानि [पृ० १०२ पं० ३] ३५ शेषेषु च भौमेषु ३६ प्रत्येकमेकैकं सिंहासनं परिवाररहितम्। ३७तेषां द्वाराणां ३८आकारा–उपरितना आकारा +उत्तरङ्गादिरूपाः क्वचित् ○'उवरिमागारा' इत्येव पाठः, ३९ षोडशविधैः रत्नैरुपशोभिताः ४० तद्यथा–रत्नैः–सामान्यतः कर्केतनादिभिः 'यावत्'

५

१०



---

8 मे+अक्खायं=मक्खायं [८–१–१० हैम०]। * –यं सूरियाभे विमाणे पण्णट्ठि–वि० बा०। +भाषायाम् 'ओतरंग' इति प्रसिद्धम्।
○ विवरणकारदर्शितं पाठान्तरम्।

रयणेहिं जाव [पृ० ५७ पं० १–२] रिट्ठेहिं[41], तेसिं[42] णं दाराणं उप्पिं[43] अट्ठट्ठ[44] मंगलगा[45] सज्झया जाव छत्तातिछत्ता [पृ० ८० पं० १–२] ⊙एवमेव[46] सपुव्वावरेणं सूरियाभे विमाणे चत्तारि दारसहस्सा भवंतीति मक्खायं ।

[१०८] सूरियाभस्स[1] विमाणस्स चउद्दिसिं[2] पंच जोयणसयाइं[3] अबाहाए[4] चत्तारि[5] वणसंडा पन्नत्ता, तंजहा–असोगवणे[6], सत्तिवणे[7] चंपगवणे[8], चूयगवणे[9] पुरत्थिमेणं असोगवणे दाहिणेणं सत्तवन्नवणे पच्चत्थिमेणं चंपगवणे उत्तरेणं

करणात् वज्रैः वैडूर्यैः लोहिताक्षैः मसारगल्लैः हंसगर्भैः पुलकैः सौगन्धिकैः ज्योतीरसैः अङ्कैः अञ्जनैः रजतैः अञ्जनपुलकैः जातरूपैः स्फटिकैरिति परिग्रहः षोडशैः ४१ रिष्टैः । ४२ तेषां द्वाराणां प्रत्येकम् ४३ उपरि ४४ अष्टौ अष्टौ स्वस्तिकादीनि ४५ मङ्गलकानि इत्यादि यानविमानतोरणवत् तावद् वाच्यं यावद् बहवः 'सहस्रपत्रहस्तकाः' [पृ० ७९–८० पं०२–] इति। अत ऊर्ध्वं केषुचित् पुस्तकान्तरेष्वेवं पाठः ४६ ⊙'एवमेव सपुव्वावरेणं सूरियाभे विमाणे चत्तारि दारसहस्सा भवन्तीति मक्खायं' इति सुगमम् । ५

[१०८] १ सूर्याभस्य विमानस्य २ चतुर्दिशं–चतस्रो दिशः समाहृताश्चतुर्दिक् तस्मिन् चतुर्दिशि चतसृषु दिक्षु ३ पञ्च पञ्च योजनशतानि ४ बाधनं बाधा आक्रमणमित्यर्थः न बाधा अबाधा–अनाक्रमणं तस्यामबाधायां कृत्वेति गम्यते–अपान्तरालं मुक्त्वेति भावः ५ चत्वारो वनखण्डाः प्रज्ञप्ताः, अनेकजातीयानामुत्तमानां महीरुहाणां समूहो वनखण्डः उक्तं च ○जीवाभिगमचूर्णौ– "अणेगजाईएहिं उत्तमेहिं रुक्खेहिं वणसंडे' [ ] इति, तानेव वनखण्डान् नामतो दिग्भेदतश्च दर्शयति ६ अशोकवृक्षप्रधानं वनमशोकवनं एवं ७ सप्तपर्णवनम् ८ चम्पकवनम् ९ चूतवनमपि भावनीयम् । 'पुरत्थिमेणं' इत्यादि पाठसिद्धं, अत्र १०

⊙ विवरणकारदर्शितं पाठान्तरम् ।○ "एगजाईएहिं रुक्खेहिं वणं अणेगजाईएहिं उत्तमेहिं रुक्खेहिं वणसण्डे" [जीवाजीवा० वृ०पृ०१८६ पं०७ ]

रायपसेण-
इयं।

चूयगवणे। [10]ते णं वणखंडा [11]साइरेगाइं अद्धतेरस जोयणसयसहस्साइं आयामेणं [12]पंच जोयणसयाइं विक्खंभेणं [13]पत्तेयं पत्तेयं पागारपरिक्खित्ता [14]किण्हा [15]किण्होभासा [16]नीला [17]नीलोभासा [18]हरिया हरियोभासा [20]सीया सीयोभासा

संग्रहणिगाथा–"पुव्वेण असोगवणं दाहिणतो होइ सत्तिवण्णवणं। अवरेणं चम्पकवणं चूयवणं उत्तरे पासे"॥ १० ते च वनखण्डाः ११ सातिरेकानि अर्द्धत्रयोदशानि–सार्द्धानि द्वादश योजनशतसहस्राणि आयामतः १२ पञ्च योजनशतानि विष्कम्भतः १३ प्रत्येकं प्रत्येकं प्राकारपरिक्षिप्ताः, पुनः कथंभूतास्ते वनखण्डाः? इत्याह–'किण्हा किण्होभासा जाव पडिमोयणा सुरम्मा' इति 'यावत्' करणादेवं परिपूर्णः पाठः *सूचितः। अस्य व्याख्या–१४ इह प्रायो वृक्षाणां मध्यमे वयसि वर्त्तमानानि पत्राणि कृष्णानि भवन्ति ततस्तद्योगात् वनखण्डा अपि कृष्णाः, १५ न चोपचारमात्रात् ते कृष्णा इति व्यपदिश्यन्ते किन्तु तथाप्रतिभासनात्, तथा चाह–कृष्णावभासा यावति भागे कृष्णावभासपत्राणि सन्ति तावति भागे ते वनखण्डाः कृष्णा अवभासन्ते, ततः कृष्णोऽवभासो येषां ते कृष्णावभासा इति, १६ तथा हरितत्वमतिक्रान्तानि कृष्णत्वमसंप्राप्तानि पत्राणि नीलानि तद्योगाद् वनखण्डा अपि नीलाः, १७ न चैतदुपचारमात्रेणोच्यते किन्तु तथावभासात्, तथा चाह–÷नीलावभासाः, १८ यौवने तान्येव पत्राणि किसलयत्वं रक्तत्वं चातिक्रान्तानि ईषत्–हरितालाऽऽभानि पाण्डूनि =सन्ति 'हरितानि' इति व्यपदिश्यन्ते, ततस्तद्योगात् वनखण्डा अपि हरिताः, १९ न चैतदुपचारमात्रादुच्यते, किन्तु तथाप्रतिभासात्, तथा चाह–हरितावभासाः, तथा २० बाल्यादतिक्रान्तानि वृक्षाणां पत्राणि शीतानि भवन्ति ततस्तद्योगाद् वनखण्डा अपि शीता इत्युक्ताः, २१ न च न ते गुणतस्तथा किन्तु तथैव, तथा चाह–शीता-

५

१०



* अस्य सूचितस्य पाठस्य मूले एव स्थलनिर्देशः कृतः। ÷ "समासः प्राग्वत्" राय० वि०। = कृदन्तम्–प्रथमाबहुवचनम्।

निद्धा[22] निद्धोभासा[23] तिव्वा[22] तिव्वोभासा[23] किण्हा[24] किण्हच्छाया[25] नीला[26] नीलच्छाया हरिया हरियच्छाया सीया[27] सी-
यच्छाया निद्धा निद्धच्छाया घणकडितडियच्छाया[28]

वभासाः–अधोभागवर्त्तिनां वैमानिकदेवानां देवीनां तद्योगशीतवातसंस्पर्शतः ते शीता वनखण्डा अवभासन्ते इति, तथा २२ एते कृष्णनीलहरितवर्णा यथा स्वस्मिन् स्वरूपे अत्यक्ते स्निग्धा भण्यन्ते तीव्राश्च ततः तद्योगात् वनखण्डा अपि स्निग्धाः २२ तीव्राश्च इत्युक्ताः, २३ न चैतदुपचारमात्रं किन्तु तथाऽवभासोप्यस्ति तत उक्तम्–स्निग्धावभासाः २३ तीव्रावभासाः इति, २४इहावभासो भ्रान्तोऽपि भवति यथा मरुमरीचिकासु जलावभासस्ततो नावभासमात्रोपदर्शनेन यथावस्थितं वस्तुस्वरूपं वर्णितं भवति किन्तु तथास्वरूपप्रतिपादनेन, ततः कृष्णत्वादीनां तथास्वरूपप्रतिपादनार्थमनुवादपुरस्सरं विशेषणान्तरमाह–'किण्हा किण्हच्छाया' इत्यादि, कृष्णा वनखण्डाः, कुत इत्याह–२५कृष्णच्छायाः≈–ततोऽयमर्थः–यस्मात् कृष्णा छाया–आकारः सर्वाविसंवादितया तेषां तस्मात् कृष्णाः एतदुक्तं भवति–सर्वाविसंवादितया तत्र कृष्ण आकार उपलभ्यते, न च भ्रान्तावभाससंपादितसत्ताकः सर्वाविसंवादी भवति, ततस्तत्त्ववृत्त्या ते कृष्णाः न भ्रान्तावभासमात्रव्यवस्थापिता इति, एवं २६ नीला नीलच्छाया इत्याद्यपि भावनीयम् नवरं २७ शीताः शीतच्छायाः इत्यत्र छायाशब्द आतपप्रतिपक्षवस्तुवाची द्रष्टव्यः, २८ 'घन×कडितडियच्छाया' इति इह शरीरस्य मध्यभागे कटिस्ततोऽन्यस्यापि मध्यभागः

≈ "निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्" पृ० १०२ टिप्पण ○ । × " 'घनकडियकडच्छाए'–तत्रायमर्थः–कटः संजातः अस्य इति कटितः कटान्तरेण उपरि आवृत इत्यर्थः कटितश्चासौ कटश्च कटितकटः घना निविडा कटितकटस्य इव अधोभूमौ छाया यस्य स घनकटितकटच्छायः "–[ जीवाजीवा० प्र० पृ० १८७ पं० ११ ] पृ० ९ पं० ४ ।

रायपसेण-
इयं।

रम्मा महामेहनिकुरुंबभूया ³¹ते णं पायवा मूलमंतो वणखंडवन्नओ [पृ० ९ पं० १–पृ० १७ पं० ३]

[१०९] तेसिं णं वणसंडाणं अंतो बहुसमरमणिज्जा भूमिभागा पण्णत्ता से जहा✻ नामए आलिंगपुक्खरे ति वा [कं० ३३–३८] जाव णाणाविहपंचवण्णेहिं मणीहि य तणेहि य उवसोभिया, तेसिं णं गंधो फासो णेयव्वो जहक्कमं [कं० ३९–४०]

---

कटिरिव कटिरित्युच्यते, कटिस्तटमिव कटितटं घना–अन्योऽन्यशाखाप्रशाखानुप्रवेशतो निविडा कटितटे–मध्यभागे छाया येषां ते तथा–मध्यभागे निविडतरच्छाया इत्यर्थः, अत एव २९ रम्यो–रमणीयः तथा ३० महान् जलभारावनतप्रावृट्कालभावी यो मेघनिकुरुम्बो–मेघसमूहस्तं भूता–गुणैः प्राप्ता महामेघनिकुरुम्बभूताः, महामेघवृन्दोपमा इत्यर्थः। ३१ 'ते णं पायवा' इत्यादि, अशोकवरपादपपरिवारभूतप्रागुक्ततिलकादिवृक्षवर्णनवत् [पृ० १२ पं० ४] परिभावनीयम् नवरं 'सुयबरहिणमयणसलागा' इत्यादि विशेषणम् [पृ० १५ पं० ४] अत्रोपमया भावनीयम् 'अणेगसगडरहजाण' इत्यादि [पृ० १७ पं० ३] तदाकारभावतः।

[१०९] १तेषां =वनखण्डानाम् २अन्तः–मध्ये ३ बहुसमरमणीया भूमिभागाः प्रज्ञप्ताः, ४तेषां च भूमिभागानां 'आलिंगपुक्खरे इ वा' इत्यादि वर्णनं प्रागुक्तं [कं० ३३–४०] तावद्वाच्यं यावन्मणीनां स्पर्शः नवरम् अत्र तृणान्यपि वक्तव्यानि, तानि चैवं ५ 'नाणाविहपंचवण्णाहिं मणीहि य तणेहि य उवसोभिया [पृ० ८३ पं० २–३ तथा कं० ३४ प्रभृति]

---

✻ इयं कण्डिका अक्षरशः जीवाजीवाभिगमसूत्रे [पृ० १८३ पं० १२] वर्तते = "अनेकजातीयानामुत्तमानां महिरुहाणां समूहो वनखण्डः"– जीवा० वि० पृ० १८६ पं० ५।

रायपसेणइयं।

॥१८६॥

[११०] प्र०–तेसिं ~णं भंते! तणाण य मणीण य पुव्वावरदाहिणुत्तरागतेहिं वातेहिं मंदायं मंदायं एइयाणं वेइयाणं कंपियाणं चालियाणं फंदियाणं घट्टियाणं खोभियाणं उदीरिदाणं केरिसए सद्दे भवति?

उ०–गोयमा! से जहानामए सीयाए वा संदमाणीए वा रहस्से वा सच्छत्तस्स

[११०] प्र०–सम्प्रति १ तेषां मणीनां तृणानां च वातेरितानां शब्दस्वरूपप्रतिपादनार्थमाह–२ भदन्त! =परमकल्याणयोगिन्! तृणानां ३ पूर्वापरदक्षिणोत्तरगतैर्वातैः ४ मन्दं मन्दं ५ एजितानां–कम्पितानां–६ व्येजितानां–विशेषतः कम्पितानां, एतदेव पर्याय-शब्देन व्याचष्टे ७ कम्पितानां तथा ८ चालितानां–इतस्ततो मनाक् विक्षिप्तानां, एतदेव पर्यायेण व्याचष्टे–९स्पन्दितानां तथा १० घट्टितानां परस्परं संघर्षयुक्तानां तथा कथं घट्टितानाम् इत्याह–११क्षोभितानां, स्वथानाचालनमपि कुत इत्याह–१२उदीरितानाम् उत्–प्राबल्येन प्रेरितानाम्, १३ कीदृशः शब्दः प्रज्ञप्तः?

उ०–भगवानाह–१४गौतम! १५ स १६ यथानामकः १७शिबिकाया वा १८स्पन्दमानिकाया वा १९रथस्य वा, तत्र १७ शिबिका जम्पानविशेषरूपा उपरिच्छादिता कोष्ठाकारा, तथा १८ दीर्घो जम्पानविशेषः पुरुषस्य स्वप्रमाणावकाशदायी स्पन्दमानिका–अनयोश्च शब्दः पुरुषोत्पाटितयोः क्षुद्रहेमघण्टिकादिचलनवशतो वेदितव्यः १९ रथश्चेह संग्रामरथः प्रत्येयः अग्रेतनविशेषणानामन्यथाऽसंभवात्, तस्य च फलवेदिका यस्मिन् काले ये पुरुषास्तदपेक्षयाऽ कटिप्रमाणाऽवसेया, तस्य च रथस्य विशेषणान्यभिधत्ते–२० सच्छत्रस्य

~ इमा अपि प्रश्नोत्तररूपाः सर्वाः कण्डिकाः जीवा० मू० पृ० १८५ पं० १०–पृ० १८६ पं० ३। = इदं शब्दवर्णनरूपं समग्रं विवरणं जीवा० विवरणमिव अक्षरशः प्रतिभाति–जीवा० वि० प्र० पृ० १९२ पं० २३–पृ० १९५ पं० ३। ऽ या कतिप्र–पा० ४–५ भा० १।–या

विमान-वनखण्ड तृणशब्द वर्णनम्।

॥१८७॥

सज्झयस्स सघंटस्स सपडागस्स सतोरणवरस्स सनंदिघोसस्स सखिंखिणिहेमजालपरिखित्तस्स हेमवयचित्त-तिणिसकणगणिज्जुत्तदारुयायस्स×सुसंपिनद्धचक्कमंडलधुरागस्स कालायससुकयणेमिजंतकम्मस्स +आइण्णवर-तुरगसुसंपउत्तस्स○

२१सध्वजस्य २२सघण्टाकस्य-उभयपार्श्वावलम्बिमहाप्रमाणघण्टोपेतस्य २३सपताकस्य २४सह तोरणवरं-प्रधानतोरणं यस्य स सतोरणवरस्तस्य, २५ सह नन्दिघोषो-द्वादशतूर्यनिनादो यस्य स सनन्दिघोषस्तस्य, तथा २६ सह किङ्किण्यः-क्षुद्रघण्टा येषामिति सकिङ्किणीकानि, हेमजालानि-हेममयदामसमूहास्तैः सर्वासु दिक्षु पर्यन्तेषु-बहिःप्रदेशेषु परिक्षिप्तो-व्याप्तस्तस्य, तथा २७ हैमवतं-हिमवत्पर्वतभावि चित्रं-विचित्रमनोहारिचित्रोपेतं तिनिशं-तिनिशतरुसंबन्धि कनकनियुक्तं कनकविच्छुरितं दारु-काष्ठं यस्य स हैमवतचित्रतैनिशकनकनिर्युक्तदारुकस्तस्य, तथा २८ सुष्ठु-अतिशयेन सम्यक् पिनद्धं-बद्धं ÷अरकमण्डलं धूश्च यस्य स सुसंपिनद्धारकमण्डलधूष्कस्तस्य, तथा २९ कालायसेन-लोहेन सुष्ठु-अतिशयेन कृतं नेमेः-बाह्यपरिधेर्यन्त्रस्य च-अरकोपरिफलकचक्रवालस्य कर्म यस्मिन् स कालायससुकृतनेमियन्त्रकर्मा तस्य, तथा ३० आकीर्णा-गुणैर्व्याप्ता ये वराः-प्रधानास्तुरगास्ते सुष्ठु-अतिशयेन सम्यक्

५

१०

ततिप्र-मु० पु०। × "सूत्रे च द्वितीयः 'क' कारः+ स्वार्थिकः पूर्वस्य च दीर्घत्वं प्राकृतत्वात्"-राय० वि०। +आजन्य-आजण्ण-आयण्ण-आइण्ण। 'आजन्य' शब्दः 'सर्वोत्तम'पर्यायः। विवरणकारः 'आइण्ण' शब्दं 'आकीर्ण' शब्देन संस्करोति। ○ "प्राकृतत्वात् बहुव्रीहौ अपि *क्तान्तस्य परनिपातः"-राय० वि०। ÷ मूलपाठे-'चक्कमण्डल' इति।

+ दारु+क-दारुकक-दारुकाक-दारुयाय। * 'सुसंपउत्त' पदस्य।

[३१]कुसलणरच्छेयसारहिसुसंपरिग्गहियस्स [३२]सरसयबत्तीसतोणपरिमंडियस्स [३३]सकंकडावयंसगस्स [३४]सचावसर-
[३५]पहरण-[३६]आवरणभरियजोध[३७]जुज्झसज्जस्स [३८]रायंगणंसि वा [३९]रायंतेउरंसि वा [४०]रम्मंसि वा मणिकुट्टिमतलंसि [४१]अभि-
क्खणं अभिक्खणं [४२]अभिघट्टिज्जमाणस्स वा नियट्टिज्जमाणस्स वा [४३]ओराला [४४]मणोण्णा मणोहरा [४५]कण्ण-मणनिव्वु-
इकरा सद्दा सव्वओ समंता अभिणिस्सवंति, भवेयारूवे सिया? णो इणट्ठे समट्ठे।

प्रयुक्ता-योजिता यस्मिन् स आकीर्णवरतुरगसुसंप्रयुक्तः तस्य, तथा ३१ सारथिकर्मणि ये कुशला नरास्तेषां मध्ये अतिशयेन छेको- ५
दक्षः सारथिस्तेन सुष्ठु सम्यक् परिगृहीतस्य, तथा ३२ शराणां शतं प्रत्येकं येषु तानि शरशतानि तानि च तानि द्वात्रिंशत् तूणानि
च बाणाश्रयाः तैर्मण्डितः शरशतद्वात्रिंशत्तूणमण्डितः, किमुक्तं भवति?-एवं नाम तानि द्वात्रिंशत् शरशतभृतानि तूणानि रथस्य
सर्वतः पर्यन्तेष्ववलम्बितानि यथा तानि संग्रामायोपकल्पितस्यातीव मण्डनाय भवन्तीति, तथा ३३ कङ्कटः-कवचं सह कङ्कटो यस्य
स सकङ्कटः सकङ्कटोऽवतंसः-शेखरो यस्य स सकङ्कटावतंसस्तस्य, तथा ३४ सह चापं येषां ते सचापाः सचापाः ये शरा यानि च
कुन्त-≋भल्लि-मुसण्ढिप्रभृतीनि नानाप्रकाराणि ३५ प्रहरणानि यानि च कवच-खेटकप्रमुखानि ३६ आवरणानि तैर्भृतः-परिपूर्णः, १०
तथा योधानां युद्धं तन्निमित्तं सज्जः-प्रगुणीभूतो यः स ३७ योधयुद्ध×सज्जः तस्य, इत्थंभूतस्य ३८ राजाङ्गणे वा ३९ अन्तःपुरे वा
४० रम्ये वा मणिकुट्टिमतले-मणिबद्धभूमितले ४१ अभीक्ष्णमभीक्ष्णं मणिकोट्टिमतलप्रदेशे राजाङ्गणादिप्रदेशे वा ४२अभिघट्यमानस्य
वेगेन गच्छतो ये ४३ उदारा ४४ मनोज्ञाः ४५ कर्णमनोनिर्वृतिकराः सर्वतः समन्तात्।

≋ -भिल्लि-मुखण्ठि-पा० ५। × "-ततः पूर्वपदेन सह विशेषणसमासः"-राय० वि०।

रायपसेणइयं।

उ०–से× जहा णाम ए वेयालियवीणाए उत्तरमंदामुच्छियाए अंके सुपइट्ठियाए कुसलनरनारिसुसंपरिग्गहियाते चंदणसारनिम्मियकोणपरिघट्टियाए पुव्वरत्तावरत्तकालसमयंमि मंदायं मंदायं वेइयाए पवेइयाए चालियाए घट्टियाए खोभियाए उदीरियाए ओराला मणुण्णा मणहरा कण्ण–मणनिव्वुइकरा सद्दा सव्वओ समंता अभिनिस्सवंति, भवेयारूवे सिया? णो इणट्ठे समट्ठे।

उ०—से जहा नाम ए किन्नराण वा किंपुरिसाण वा महोरगाण वा गंधव्वाण वा भद्दसालवणगयाणं वा नंदणवणगयाणं वा सोमणसवणगयाणं वा पंडगवणगयाणं वा हिमवंतमलयमंदरगिरिगुहासमन्नागयाण वा एगओ सन्निहियाणं समागयाणं सन्निसन्नाणं समुवविट्ठाणं पमुइयपक्कीलियाणं गीयरइगंधव्वहसियमणाणं गज्जं पज्जं कत्थं गेयं पयबद्धं पायबद्धं उक्खित्तं पायंतं मंदायं [पृ० १४४ पं० ४] रोइयावसाणं सत्तसरसमन्नागयं = छद्दोसविप्पमुक्कं एक्कारसालंकारं अट्ठगुणोववेयं, 5



⊖ जीवाभिगममूलटीकायामपि ४६ "⊙ उप्पित्थं श्वासयुक्तम्" [ ] इति, तथा उत्–प्राबल्येन अतितालमस्थानतालं वा उत्तालं, श्लक्ष्णस्वरेण काकस्वरं, सानुनासिकं–सानुनासम्–नासिकाविनिर्गच्छत्स्वरानुगतमिति भावः, तथा ४७ अष्टाभिर्गुणैरु- 10

× अस्याः समग्रायाः अपि कण्डिकायाः विवरणम्–[जीवा० सू० वृ० पृ० १९३–१९४] = –यं अट्ठरससंपउत्तं भा० २। ⊖ जीवा० वि० पृ० १९४ पं० ९। अत्र मूलविवरणयोर्भेदः। ⊙ "उप्पित्थं तट्ठ–कुविय–विहुरेसु"–"उप्पित्थं त्रस्तम् कुपितम् विधुरं चेति त्र्यर्थम्"–देशीनाम० व० १ गा० १२९।

गुंजाऽवंककुहरोवगूढं रत्तं तिट्ठाणकरणसुद्धं [ कं० ६३ ] पगीयाणं, भवेयारूवे ?

उ०–हंता सिया।

[१११] तेसिं णं वणसंडाणं तत्थ तत्थ तहिं तहिं देसे देसे बहूईओ खुड्डा खुड्डियातो

पेतमष्टगुणोपेतं ते चाष्टौ अमी गुणाः–पूर्णम् रक्तम् अलंकृतम् व्यक्तम् अविघुष्टम् मधुरम् समम् सललितं च। तथा चोक्तम्–"पुण्णं रत्तं च अलंकियं च वत्तं तहेव अविघुट्ठं। महुरं समं सललियं अट्ठ गुणा होंति गेयस्स" [ ] तत्र यत् स्वरकलाभिः परिपूर्णं गीयते तत् पूर्णम्, गेयरागानुरक्तेन यद् गीयते तद् रक्तम्, अन्योन्यस्वरविशेषकरणेन यद् अलंकृतमिव गीयते तद् अलङ्कृतम्, अक्षरस्वरस्फुटकरणतो व्यक्तम्, विस्वरं क्रोशतीव विघुष्टं न तथा अविघुष्टम्, मधुरस्वरेण गीयमानं मधुरं कोकिलारुतवत्, तालवंशस्वरादिसमनुगतं समम्, तथा यत् स्वरघोलनाप्रकारेण ललतीव तत् सह ललितेन–ललनेन वर्त्तत इति सललितम् यदि वा यत् श्रोत्रेन्द्रियस्य शब्दस्पर्शनमतीव सूक्ष्ममुत्पादयति सुकुमारमिव च प्रतिभासते तत् ○ सललितम्। इदानीमेतेषामेवाष्टानां मध्ये कियतो गुणान् अन्यच्च प्रतिपिपादयिषुरिदमाह–'४८रत्तं तिट्ठाणकरणसुद्धं'......[पृ० १३१ पं० ११] तत् यथा प्राक् नाट्यविधौ व्याख्यातं तथा भावनीयम् '*जारिसए सद्दे हवइ' प्रगीतानां–गातुमारब्धवतां यादृशः शब्दोऽतिमनोहरो भवति–स्यात्–कथंचिद् भवेद् एतद्रूपस्तेषां तृणानां मणीनां च शब्दः ? एवमुक्ते भगवानाह–गौतम! स्यादेवंभूतः शब्दः।

[१११] १ तेषां वनखण्डानां मध्ये २तत्र तत्र देशे 'तत्र तत्र' इति तस्यैव देशस्य तत्र तत्र एकदेशे ३बह्व्यः ४क्षुल्लिकाः क्षुल्लिका

○ इदं समस्तं संगीतस्वरूपं जीवा० वृ० [पृ० १९४–१९५] सविस्तरं चर्चितम्। * मूलपाठे नैतद् वाक्यं प्रतिभाति।

वनखण्डे वापीकूपप्रभृतीनि दिव्यसुखसाधनानि।

९

१०

[5]वावीयाओ [6]पुक्खरिणीओ [7]दीहियाओ [8]गुंजालियाओ [9]सरपंतियाओ [10]सरसरपंतियाओ [11]बिलपंतिओ [12]अच्छाओ [13]सण्हाओ [14]रययामयकूलाओ [15]समतीरातो [16]वयरामयपासाणातो [17]तवणिज्जतलाओ [18]सुवण्णसुज्झरययवालुयाओ [19]वेरुलियमणिफालियपडलपच्चोयडाओ [20]सुहोयारसुउत्ताराओ [21]णाणामणितित्थसुबद्धाओ

---

लघवो लघवो इत्यर्थः, ५ वाप्यश्चतुरस्राः ६ पुष्करिण्यो वृत्ताकारा अथवा पुष्कराणि विद्यन्ते यासु ताः पुष्करिण्यः ७दीर्घिका ऋज्व्यो नद्यः ८ वक्रा नद्यो गुञ्जालिकाः, ९ बहूनि केवलकेवलानि पुष्पावकीर्णकानि सरांसि एकपङ्क्त्या व्यवस्थितानि सरःपङ्क्तिः—बह्व्यः सरःपङ्क्तयः तथा १० येषु सरःसु पङ्क्त्या व्यवस्थितेषु कूपोदकं प्रणालिकया संचरति सा सरःसरःपङ्क्तिः ताः—बह्व्यः सरःसरःपङ्क्तयः, तथा ११ बिलानीव * बिलानि—कूपास्तेषां पङ्क्तयः बिलपङ्क्तयः एताश्च सर्वा अपि कथंभूताः ? इत्याह—१२ अच्छाः—स्फटिकवद् बहिर्निर्मलप्रदेशाः १३ श्लक्ष्णाः—श्लक्ष्णपुद्गलनिष्पादितबहिःप्रदेशाः श्लक्ष्णदलनिष्पन्नपटवत्, तथा १४ रजतमयं—रूप्यमयं कूलं यासां ता रजतमयकूलाः, तथा १५ समं—न गर्ताभावात् विषमम्—तीरं—तीरवर्तिजलापूरितं स्थानं यासां ताः समतीराः, तथा १६ वज्रमयाः पाषाणा यासां ता वज्रमयपाषाणाः, तथा १७ तपनीयं—हेमविशेषः तपनीयमयं तलं यासां तास्तपनीयतलाः, तथा १८ सुवर्णं—पीतकान्ति हेम सुज्झं—रूप्यविशेषः रजतं प्रतीतं तन्मय्यो वालुका यासु ताः सुवर्णसुज्झरजतवालुकाः, १९ वैडूर्यमणिमयानि स्फटिकपटलमयानि च प्रत्यवतटानि—तटसमीपवर्त्तिनः अत्युन्नतप्रदेशा यासां ता वैडूर्यमणिस्फटिकपटलप्रत्यवतटाः, २० सुखेनावतारो जलमध्ये प्रवेशनं यासु ताः सुखावताराः तथा सुखेन उत्तारो—जलमध्याद् बहिर्निर्गमनं यासु ताः +सुखोत्ताराः २१ नानामणिभिः—नानाप्रका-







---

* मारवाडीभाषायाम् 'कूप' पर्यायः 'बेरा' शब्दः श्रूयते। + "ततः पूर्वपदेन विशेषणसमासः"—राय० वि०।

रायपसेण
इयं।

चउक्कोणाओ [23]आणुपुव्वसुजातवप्पगंभीरसीयलजलाओ [24]संछन्नपत्तभिसमुणालाओ [25]बहुउप्पलकुमुयनलिणसुभग-सोगंधियपोंडरीयसयवत्तसहस्सपत्तकेसरफुल्लोवचियाओ [26]छप्पयपरिभुज्जमाणकमलाओ [27]अच्छविमलसलिल-पुण्णाओ [28]पडिहत्थभमंतमच्छकच्छभ-

॥१९२॥

रैर्मणिभिस्तीर्थानि सुबद्धानि यासां ता नानामणितीर्थसुबद्धाः=, २२चत्वारः कोणा यासां ताश्चतुष्कोणाः, एतच्च विशेषणं वापीः कूपांश्च प्रति द्रष्टव्यम् तेषामेव चतुष्कोणत्वसम्भवात् न शेषाणाम्, तथा २३ आनुपूर्व्येण-क्रमेण नीचैर्नीचैस्तरभावरूपेण सुष्ठु-अतिशयेन यो जातो वप्रः-केदारो जलस्थानं तत्र गम्भीरं-अलब्धस्ताघं शीतलं जलं यासु ता आनुपूर्व्यसुजातवप्रगम्भीरशीतलजलाः, २४संछन्नानि-जलेनान्तरितानि पत्रबिसमृणालानि यासु ताः संछन्नपत्रबिसमृणालाः, इह बिसमृणालसाहचर्यात् पत्राणि पद्मिनीपत्राणि द्रष्टव्यानि, बिसानि-कन्दाः मृणालानि-पद्मनालाः, तथा २५ बहुभिरुत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीकशतपत्रसहस्रपत्रैः केसरैः-केसर-प्रधानैः फुल्लैः-विकसितैरुपचिता बहूत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीकशतपत्रसहस्रपत्रकेसरफुल्लोपचिताः, [पृ०२१ पं० १०] तथा २६ षट्पदैः-भ्रमरैः परिभुज्यमानानि कमलानि-उपलक्षणमेतत्-कुमुदानि च यासु ताः षट्पदपरिभुज्यमानकमलाः, तथा २७ अच्छेन-स्वरूपतः स्फटिकवत् शुद्धेन विमलेन-आगन्तुकमलरहितेन सलिलेन पूर्णा अच्छविमलसलिलपूर्णाः, तथा २८*पडिहत्था-अति-

5

10

= "अत्र बहुव्रीहावपि 'सुबद्ध' पदस्य क्तान्तस्य परनिपातः सुखादिदर्शनाद् प्राकृतशैलीवशाद्वा"-राय० वि०। * "पडिहत्थं उद्धुमायं =अइरेययं जाणम्-8आउण्णं" [ ] इति ÷वचनात्, उदाहरणं चात्र-"वणपडिहत्थं गयणं सराइं नवसलिलउद्धुमायाइं।

= अतिरियं व जा-भा० २। 8 आपूर्णम्। ÷ एतद् वचनं नोपलभ्यते मुद्रितदेशीशब्दकोशेषु तत्समानं वचनं तु प्राप्यते पाइअलच्छीनाममाला-

रायपसेण-
इयं।

अणेगसउणमिहुणगपविचरिताओ [30]पत्तेयं पत्तेयं [31]पउमवरवेदियापरिक्खित्ताओ [32]पत्तेयं पत्तेयं [33]वणसंडपरिक्खि-
त्ताओ [34]अप्पेगइयाओ [35]आसवोयगाओ [36]अप्पेगइयाओ [37]वारुणोयगाओ

रेकिता अतिप्रभूता इत्यर्थः भ्रमन्तो मत्स्यकच्छपा यत्र ताः परिहत्थभ्रमन्मत्स्यकच्छपाः, तथा २९ अनेकैः शकुनिमिथुनैः प्रविचरिता
इतस्ततो गमनेन सर्वतो व्याप्ताः अनेकशकुनिमिथुनकप्रविचरिताः,* एता वाप्यादयः सरस्सरःपङ्क्तिपर्यन्ताः ३० प्रत्येकं प्रत्येकं
३१ पद्मवरवेदिकया परिक्षिप्ताः, ३२ प्रत्येकं प्रत्येकं ३३ वनखण्डपरिक्षिप्ताः, ३४ अपिर्वादार्थे वाढमेककाः-काश्चन वाप्यादयः ३५
आसवमिव-चन्द्रहासादिपरमासवमिव उदकं यासां ता आसवोदकाः, ३६ अप्येकका ३७ वारुणस्य-वारुणसमुद्रस्येव उदकं यासां ता

५

॥१९३॥

○अइरेइयं मह उण चिन्ताए मणं तुहं ⊙ विरहे" । 'पडिहत्थ' शब्दः पूर्णार्थवाची देश्यः"-राय० वि० । * "ततः पूर्वपदेन विशेषणसमासः"-
राय०वि०, ✓ "प्रति प्रति एकम्-अत्र आभिमुख्ये 'प्रति' शब्दः ततो वीप्साविवक्षायां पश्चात् 'प्रत्येक'-शब्दस्य द्विर्वचनम्-इति"-राय० वि० ।

याम्-"पडिहत्थं उद्धुमायं अहिरेमइयं च अप्फुण्णं"-अंक-१४२। देशीनाममालायामपि पूर्णपर्यायः "पडिहत्थ" शब्दो निबद्धः व० ६ गा०२८।
पृ०१२४ टिप्पण÷। अस्मिन् मुद्रिते वचने 'पडिहत्थ-'उद्धुमाय'-'अइरेइय'-'अप्फुण्ण'-["क्तेन अप्फुण्णादयः" ८-४-२५८] शब्दाः 'पूर्ण' पर्या-
यतया निर्दिष्टाः। परन्तु पूर्वोक्तकोशप्रामाण्याद् हैमव्याकरणप्रामाण्यात् ["पूरेः अग्घाड-अग्घव-उद्धुमा-अंगुम-अहिरेमाः" ८-४-१६९] श्रीजी-
वाजीवाभिगमवृत्तिप्रामाण्याच्च [पृ०१९८ प्र०पं०९-११] 'अइरेइय' स्थाने 'अइ(हि)रेमइय' शब्दो युक्तः। संस्कृत 'अतिरेकित'शब्दप्रकृतिकत्वेन 'अइ-
रेइय' शब्दस्य नैव देशीत्वम्। ○ अइमयइयं भा० २। ⊙ गाथाया भावार्थः-घनप्रतिपूर्णं गगनं सरांसि नवसलिलप्रतिपूर्णानि प्रतिपूर्णं मम पुन-
श्चिन्तया मनः तव विरहे ॥ पूर्णपर्यायरूपाणां पडिहत्थ-उद्धुमाय-अइरेमइय-शब्दानां प्रयोगान् दर्शयितुं इयं गाथा दर्शिता।

१०

[३८]अप्पेगइयाओ [३९]खीरोयगाओ [४०]अप्पेगइयाओ घओ[४१]यगाओ [४२]अप्पेगइयाओ× खोदो[४३]यगाओ [४४]अप्पेगतियातो [४५]पग-
तीए [४६]उयगरसेणं [४७]पण्णत्ताओ पासादीयाओ दरिसणिज्जाओ अभिरूवाओ पडिरूवाओ। [४८]तासि णं [४९]वावीणं जाव
[कं०१११] [५०]बिलपंतीणं [५१]पत्तेयं पत्तेयं [५२]चउद्दिसिं [५३]चत्तारि [५४]तिसोपाणपडिरूवगा पण्णत्ता, तेसिं[५५] णं तिसोपाणपडि-
रूवगाणं [५६]अयमेयारूवे वण्णावासे पण्णत्ते तंजहा–[५७]वइरामया नेमा... [पृ० ७८ पं० २] तोरणाणं झया छत्ताइ-
छत्ता य णेयव्वा। ५

वारुणोदकाः, ३८ अप्येकका: ३९ क्षीरमिव उदकं यासां ताः क्षीरोदकाः, ४० अप्येकका ४१ घृतमिव उदकं यासां ता घृतोदकाः,
४२ अप्येककाः ४३ क्षोद इव–इक्षुरस इव उदकं यासां ता क्षोदोदकाः, ४४ अप्येककाः ४५ स्वाभाविकेन ४६ उदकरसेन ४७
प्रज्ञप्ताः, 'पासादीयाओ' इत्यादि विशेषणचतुष्टयं प्राग्वत् [पृ०९ पं०६]। ४८ तासां क्षुल्लिकानां ४९ वापीनां यावद् [पृ०१९१ पं०
४–] ५० बिलपङ्क्तीनामिति' 'यावत्' शब्दात् पुष्करिण्यादिपरिग्रहः, ५१ प्रत्येकं ५२ चतुर्दिशि ५३ चत्वारि एकैकस्यां दिशि एकै-
कस्य भावात् ५४ त्रिसोपानप्रतिरूपकाणि–प्रतिविशिष्टरूपाणि ⁂त्रिसोपानानि प्रज्ञप्तानि, ५५ तेषां च त्रिसोपानप्रतिरूपकाणाम् ५६ १०
अयं–वक्ष्यमाणः एतद्रूपः–अनन्तरं वक्ष्यमाणस्वरूपो वर्णकनिवेशः प्रज्ञप्तस्तद्यथा ५७ वज्ररत्नमया+ नेमा इत्यादि प्राग्वत् [पृ० ७८
पं० २]। तेषां त्रिसोपानप्रतिरूपकाणां प्रत्येकं तोरणानि प्रज्ञप्तानि, तोरणवर्णकस्तु निरवशेषो यानविमानवद् भावनीयो यावत् बहवः

× ओ अप्पेगइआओ खारोयगाओ–मु० पु०, वि० बा०। ⁂ "त्रयाणां सोपानानां समाहारः त्रिसोपानम्–तानि"–राय० वि०। + या वंगा
इ–मु० पु०।

रायपसेण-
इयं।

[११२] तासिं णं खुड्डाखुड्डियाणं वावीणं [कं० १११] जाव बिलपंतियाणं तत्थ तत्थ देसे तहिं तहिं बहवे उप्पायपव्वयगा नियइपव्वयगा जगईपव्वयगा दारुइज्जपव्वयगा दगमंडवा दगमंचगा दगमालगा दगपासायगा उसड्डा खुड्डखुड्डगा अंदोलगा पक्खंदोलगा

सहस्रपत्रहस्तकाः [पृ० ७८ पं० १] इति।

[११२] १तासां क्षुल्लिकाक्षुल्लिकानां यावद् [पृ०१९१ पं०४-] बिलपङ्क्तीनाम्, अत्रापि 'यावत्' शब्दात् पुष्करिण्यादिपरिग्रहः, २तत्र तत्र देशे तस्यैव देशस्य तत्र तत्र एकदेशे ३बहवः ४उत्पातपर्वता यत्रागत्य बहवः सूर्याभविमानवासिनो वैमानिका देवा देव्यश्च विचित्रक्रीडानिमित्तं वैक्रियशरीरमारचयन्ति, ५ नियत्या-नैयत्येन व्यवस्थिताः पर्वता नियतिपर्वताः, क्वचित् *'निययपव्वया' इति पाठः, तत्र नियताः-सदा भोग्यत्वेनावस्थिताः पर्वता नियतपर्वताः-यत्र सूर्याभविमानवासिनो वैमानिका देवा देव्यश्च भवधारणीयेनैव वैक्रियशरीरेण सदा रममाणा अवतिष्ठन्ते इति भावः, ६ जगतीपर्वतकाः पर्वतविशेषाः ७ दारुपर्वतका-दारुनिर्मापिता इव पर्वतकाः, ८ दकमण्डपाः-स्फाटिकाः मण्डपाः, उक्तं च ~जीवाभिगममूलटीकायाम्-"दगमण्डपाः-स्फाटिका मण्डपाः" [ ] इति। एवं ९ दकमञ्चकाः १० दकमालकाः ११ दकप्रासादाः, एते च दकमण्डपादयः केचित् १२ उत्सृता उच्चा इत्यर्थः, केचित् १३ क्षुल्लकाः क्षुल्लका इति, तथा १४अन्दोलकाः १५ पक्ष्यन्दोलकाश्च, इह १४यत्रागत्य मनुष्या आत्मानमन्दोलयन्ति ते 'अन्दोलकाः' इति लोके प्रसिद्धाः, १५ यत्र तु पक्षिण आगत्यात्मानमन्दोलयन्ति ते पक्ष्यन्दोलकाः, तत्र अन्दोलकाः पक्ष्यन्दोलकाश्च तेषु वनखण्डेषु तत्र

५ १०

* विवरणकारदर्शितं पाठान्तरम्। ~जीवा० वृ० प्र० पृ० २०० पं० ४।

[१६] सव्वरयणामया अच्छा जाव पडिरूवा।

[११३] तेसु णं उप्पायपव्वएसु [ कं ११२ ] पक्खंदोलएसु बहूइं हंसासणाइं कोंचासणाइं गरुलासणाइं उण्णयासणाइं पणयासणाइं दीहासणाइं भद्दासणाइं पक्खासणाइं मगरासणाइं उसभासणाइं* सीहासणाइं पउमासणाइं दिसासोवत्थियाइं सव्वरयणामयाइं अच्छाइं जाव पडिरूवाइं।

तत्र प्रदेशे देवक्रीडायोग्या बहवः सन्ति, एते च उत्पातपर्वतादयः कथंभूताः? इत्याह–१६ सर्वरत्नमयाः, 'अच्छा सण्हा' इत्यादि विशेषणकदम्बकं प्राग्वत् [ पृ० १९ पं० ५ ]। ५

[११३] १तेषु उत्पातपर्वतेषु यावद् पक्ष्यन्दोलकेषु 'यावत्' करणात् नियतिपर्वतकादिपरिग्रहः, [पृ०१९८ पं०६]२ बहूनि ३हंसासनादीनि आसनानि, तत्र येषामासनानामधो भागे हंसा व्यवस्थिताः–यथा सिंहासने सिंहाः–तानि हंसासनानि, एवं ४ क्रौञ्चासनानि ५ गरुडासनानि च भावनीयानि, ६ उन्नतासनानि–उच्चासनानि ७ प्रणतासनानि–निम्नासनानि ८ दीर्घासनानि–शय्यारूपाणि ९ भद्रासनानि येषामधोभागे पीठिकाबन्धः १० पक्ष्यासनानि येषामधोभागे नानास्वरूपाः पक्षिणः, एवं ११ मकरासनानि १२ सिंहासनानि च भावनीयानि, १३ पद्मासनानि–पद्माकाराणि आसनानि, १४ येषामधोभागे दिक्सौवस्तिका आलिखिताः सन्ति, अत्र यथाक्रममासनानां संग्रहणिगाथा–"हंसे कोंचे गरुडे उण्णय पणए य दीह भद्दे य। पक्खे मयरे पउमे सीह दिसासोत्थि बारसमे" ॥ इति तानि सर्वाण्यपि कथंभूतानि? इत्यत आह–१५'सव्वरयणामयाइं'इत्यादि प्राग्वत् [पृ० १९ पं० ५]। १०

* वि० बा०। ~ जीवा० वि० प्र० पृ० २०० पं० १४।

रायपसेण-
इयं।

[११४] तेसु[1] णं वणसंडेसु तत्थ तत्थ[2] तहिं तहिं देसे देसे बहवे[3] आलियघरगा[4] मालियघरगा[5] कयलिघरगा[6] लयाघरगा[7] अच्छणघरगा[8] पिच्छणघरगा[9] मज्जणघरगा[10] पसाहणघरगा[11] गब्भघरगा[12] मोहणघरगा[13] सालघरगा[14] जाल-[15]घरगा कुसुमघरगा[16] चित्तघरगा[17] गंधव्वघरगा[18] आयंसघरगा[19] सव्वरयणामया[20] अच्छा जाव पडिरूवा। तेसु[21] णं आलियघरगेसु जाव [प्र० पृ० पं० १-] आयंसघरगेसु तहिं तहिं घरएसु बहूइं[22] हंसासणाइं जाव दिसासोव-

[११४] १तेषु वनखण्डेषु मध्ये २तत्र तत्र प्रदेशे तस्यैव देशस्य तत्र तत्र एकदेशे ३ बहूनि ४आलिगृहकाणि–आलिः–वनस्पति-विशेषः तन्मयानि गृहकाणि आलिगृहकाणि, ५मालिरपि वनस्पतिविशेषः तन्मयानि गृहकाणि मालिगृहकाणि, ६ कदलीगृहकाणि ७ लतागृहकाणि च प्रतीतानि, ८ अवस्थानगृहकाणि–येषु यदा तदा वा आगत्य सुखासिकया अवतिष्ठन्ति, ९ प्रेक्षकगृहकाणि यत्रागत्य प्रेक्षणकानि विदधति निरीक्षन्ते च, १० मज्जनगृहकाणि यत्रागत्य स्वेच्छया मज्जनं कुर्वन्ति, ११ प्रसाधनगृहकाणि यत्रागत्य स्वं परं च मण्डयन्ति, १२ गर्भगृहकाणि गर्भगृहाकाराणि १३ मोहनं–मैथुनसेवा "रमियं मोहण–रयाइं" [ ] इति नाममालावचनात् तत्प्र-धानानि गृहकाणि मोहनगृहकाणि–वासभवनानि–इति भावः, १४ शालागृहकाणि–पट्टशालाप्रधानानि, १५ जालगृहकाणि–गवाक्षयु-क्तानि गृहकाणि, १६कुसुमगृहकाणि–कुसुमप्रकरोपचितानि गृहकाणि, १७ चित्रगृहकाणि–चित्रप्रधानानि गृहकाणि १८ गन्धर्वगृ-हकाणि–गीतनृत्ययोग्यानि गृहकाणि १९ आदर्शगृहकाणि–आदर्शमयानीव गृहकाणि, एतानि च कथंभूतानि? इत्यत आह–२० 'सव्वरयणामया' इत्यादि विशेषणकदम्बकं प्राग्वत् [पृ० १९ पं० ५]। २१ तेषु आलिगृहकेषु यावत् आदर्शगृहकेषु, अत्र 'यावत्' शब्दात् [प्र० पृ० पं० ५] मालिगृहकादिपरिग्रहः, २२ बहूनि हंसासनानि इत्यादि प्राग्वत् [पृ० १९६ पं० ७]।

५

१०

त्थिआसणाइं [ कं० ११२ ] सव्वरयणामयाइं जाव पडिरूवाइं।

[११५] तेसु णं वणसंडेसु तेत्थ तत्थ देसे तहिं तहिं बहवे जातिमंडवगा जूहियामंडवगा मल्लियामंडवगा णवमालियामंडवगा वासंतिमंडवगा दहिवासुयमंडवगा सूरिल्लियमंडवगा तंबोलिमंडवगा मुद्दियामंडवगा* णागलयामंडवगा अतिमुत्तयलयामंडवगा अप्फोयामंडगा मालुयामंडवगा अच्छा सव्वरयणामया जाव पडिरूवा।

५

[११५] १ तेषु वनखण्डेषु २ तत्र तत्र देशे तस्यैव देशस्य तत्र तत्र एकदेशे ३ बहवो ४ जातिमण्डपकाः ५ यूथिकामण्डपकाः ६ मल्लिकामण्डपकाः ७ नवमालिकामण्डपकाः ८ वासन्तीमण्डपकाः ९ दधिवासुकामण्डपकाः, दधिवासुका–वनस्पतिविशेषस्तन्मया मण्डपका दधिवासुकामण्डपकाः, १० 'सूरिल्लिः'○ अपि वनस्पतिविशेषः तन्मया मण्डपका सूरिल्लिमण्डपकाः। ११ ताम्बूली–नागवल्ली तन्मया मण्डपकास्ताम्बूलीमण्डपकाः, १२ नागो द्रुमविशेषः, स एव लता नागलता, इह यस्य तिर्यक् तथाविधा शाखा प्रशाखा वा न प्रसृता सा 'लता' इत्यभिधीयते नागलतामया मण्डपका नागलतामण्डपकाः, १३ अतिमुक्तमण्डपकाः, १४ 'अप्फोया' इति वनस्पतिविशेषस्तन्मया मण्डपका अप्फोयामण्डपकाः, १५ मालुका–एकास्थिकफला वृक्षविशेषास्तद्युक्ता मण्डपका मालुकामण्डपकाः, एते च कथंभूताः ? इत्याह–१६'सव्वरयणामया' इत्यादि प्राग्वत् [पृ० १९ पं० ५]।

१०

* वि० बा०। ○ सूरल्लि–पा० ५। सूरमल्लि–भा० १।

[११६] १तेसु णं जातिमण्डवएसु जाव [पृ० १९८ पं० १-] मालुयामंडवएसु २बहवे पुढविसिलापट्टगा हंसासणसंठिया जाव [पृ० १९६ पं० २-] दिसासोवत्थियासणसंठिया ३अण्णे य बहवे ४वरसयणासणविसिट्ठसंठाणसंठिया पुढविसिलापट्टगा पण्णत्ता समणाउसो! ५आईणगरूयबूरणवणीयतूलफासा सव्वरयणामया अच्छा जाव पडिरूवा। ६तत्थ णं ७बहवे वेमाणिया देवा य देवीओ य ८आसयंति ९सयंति

[११६] १ तेषु जातिमण्डपकेषु यावत् मालुकामण्डपकेषु 'यावत्' शब्दात् अप्येकका २ दिक्सौवस्तिकासनसंस्थिताः, 'यावत्' करणात् 'अप्पेगइया कोंचासणसंठिया अप्पेगइया गरुडासणसंठिया अप्पेगइया उण्णयासणसंठिया अप्पेगइया पणयासणसंठिया अप्पेगइया दीहासणसंठिया अप्पेगइया भद्दासणसंठिया अप्पेगइया पक्खासणसंठिया अप्पेगइया मगरासणसंठिया अप्पेगइया उसभासणसंठिया अप्पेगइया सिंहासणसंठिया अप्पेगइया पउमासणसंठिया' इति [पृ०१९६ पं०७] परिग्रहः, ३अन्ये च बहवः शिलापट्टका यानि ४ विशिष्टचिह्नानि विशिष्टनामानि च वराणि–प्रधानानि शयनानि आसनानि च तद्वत् संस्थिताः वरशयनासनविशिष्टसंस्थानसंस्थिताः, क्वचिद् 'मांसलसुघट्ठविसिट्ठसंठाणसंठिया'+ इति पाठः, तत्रान्ये च बहवः शिलापट्टकाः मांसलाः अकठिना इत्यर्थः सुघृष्टा अतिशयेन मसृणा इति भावः विशिष्टसंस्थानसंस्थिताश्चेति ५ 'आईणगरूयबूरनवणीयतुलफासमउया [ पृ० ९९ पं० २ ] 'सव्वरयणामया अच्छा जाव पडिरूवा' इति प्राग्वत् [ पृ० १९ पं० ५ ]। तत्र ६ तेषु उत्पातपर्वतादिगतहंसासनादिषु यावत् [पृ०१९६ पं०७] नानारूपसंस्थानसंस्थितपृथ्वीशिलापट्टकेषु ७ बहवः सूर्याभविमानवासिनो देवा देव्यश्च यथासुखम् ८ आसते ९ शेरते–दीर्घकाय-

+ विवरणकारदर्शितः पाठभेदः।

रायपसेण-
इयं।

॥२००॥

चिट्ठंति[10] निसीयंति[11] तुयट्टंति[12] रमंति[13] ललंति[14] कीलंति[15] ÷किट्टंति मोहंति[16] पुरा[17] पोराणाणं[18] सुचिण्णाण[19] सुपरिक्कंताण सुभाण[21] कडाण[22] कम्माण कल्लाणाण[23] कल्लाणं[24] फलविवागं[25] पच्चणुब्भवमाणा[26] विहरंति[27]।

देवानां
क्रीडना-
दीनि

प्रसारणेन वर्त्तन्ते न तु निद्रां कुर्वन्ति तेषां देवयोनिकत्वेन निद्राया अभावात्, १० तिष्ठन्ति–ऊर्ध्वस्थानेन वर्त्तन्ते ११ निषीदन्ति–उपविशन्ति १२ तुयट्टंति–त्वग्वर्त्तनं कुर्वन्ति, वामपार्श्वतः परावृत्त्य दक्षिणपार्श्वेनावतिष्ठन्ति दक्षिणपार्श्वतो वा परावृत्त्य वामपार्श्वेनेति भावः, १३ रमन्ते–रतिमाबध्नन्ति १४ ललन्ति–मनईप्सितं यथा भवति तथा वर्त्तन्ते इति भावः, १५ क्रीडन्ति यथासुखमितस्ततो गमनविनोदेन गीतनृत्यादिविनोदेन वा तिष्ठन्ति १६ मोहन्ति–मैथुनसेवां कुर्वन्ति इत्येवं १७पुरा–पूर्वं प्राग्भवे इति भावः २२कृतानां कर्मणामिति योगः, अत एव १८ पौराणानां १९सुचीर्णानां–सुचरितानां, इह सुचरितजनितं कर्मापि कार्ये कारणोपचारात् सुचरितं, ततोऽयं भावार्थः–विशिष्टतथाविधधर्मानुष्ठानविषयाप्रमादकरणक्षान्त्यादिसुचरितजनितानामिति, तथा २० सुपराक्रान्तानां, अत्रापि कार्ये कारणोपचारात् सुपराक्रान्तिजनितानि सुपराक्रान्तानि इत्युक्तम्, किमुक्तं भवति ? सकलसत्त्वमैत्री–सत्यभाषण–परद्रव्यानपहार–सुशीलादिरूपसुपराक्रमजनितानामिति, अत एव २१ शुभानां शुभफलानां, इह किञ्चिदशुभफलमपि इन्द्रियमतिविपर्यासात् शुभफलं प्रतिभासते ततस्तात्त्विकशुभत्वप्रतिपत्त्यर्थमस्यैव पर्यायशब्दमाह–२३ कल्याणानां, तत्त्ववृत्त्या तथाविधविशिष्टफलदायिनां, अथवा कल्याणानां अनर्थोपशमकारिणां २४ कल्याणरूपं २५ फलविपाकं २६ प्रत्येकमनुभवन्तो २७ विहरन्ति–आसते।

÷ वि० बा०।

[११७] तेसिं णं वणसंडाणं [2]बहुमज्झदेसभाए [3]पत्तेयं पत्तेयं [4]पासायवडेंसगा पण्णत्ता, [5]ते णं पासायवडेंसगा [6]पंच जोयणसयाइं उड्ढं उच्चत्तेणं [7]अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं [8]अब्भुग्गयमूसियपहसिया [ पृ० १६९ पं० ३]इव तहेव [9]बहुसमरमणिज्जभूमिभागो उल्लोओ सीहासणं सपरिवारं [ पृ०८१,९७ पं० ३ तथा पृ०१०२ पं० ३] [10]तत्थ णं [11]चत्तारि देवा महिड्ढिया जाव [12]पलिओवमट्ठितीया [13]परिवसंति, तंजहा–[14]असोए [15]सत्तपण्णे [16]चंपए [17]चूए।

[११७] १ तेषां वनखण्डानां २ बहुमध्यदेशभागे ३ प्रत्येकं प्रत्येकं ४ प्रासादावतंसका इति, अवतंसक इव–शेखरक इवावतंसकः प्रासादानामवतंसक इव प्रासादावतंसकः प्रासादविशेष इति भावः, ५ ते च प्रासादावतंसकाः ६ पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन ७ अर्द्धतृतीयानि योजनशतानि विष्कम्भतः, तेषां च ८ 'अब्भुग्गयमूसियपहसिया विव' इत्यादिविशेषणजातं प्राग्वत् [ पृ० १६९ पं० ३–९ ]। ९ भूमिवर्णनं उल्लोकवर्णनं सिंहासनवर्णनं सपरिवारं च प्राग्वत् [ पृ० ८१–९७ पं० ३ तथा पृ० १०२ पं० ३ ]। १० तत्र–तेषु वनखण्डेषु प्रत्येकमेकैक*देवभावे ११ चत्वारो देवा महर्द्धिका 'यावत्' करणात् 'महज्जुइया महाबला महासुक्खा महाणुभावा' इति परिग्रहः, १२ पल्योपमस्थितिकाः १३ परिवसन्ति, तद्यथा–१४ अशोकवने अशोकः १५ सप्तपर्णवने सप्तपर्णः १६ चम्पकवने चम्पकः १७ चूतवने चूतः ○ 'ते णं'इत्यादि, ते अशोकादयो देवाः स्वकीयस्य वनखण्डस्य स्वकीयस्य प्रासादावतंसकस्य, सूत्रे बहुवचनं प्राकृतत्वात्, प्राकृते वचनव्यत्ययोऽपि भवतीति, स्वकीयानां सामानिकदेवानां स्वासां स्वासामग्रमहिषीणां सपरिवाराणां







* –कदिग्भावेन च–भा० २। ○ अस्य विवरणस्य मूलपाठः, प्रस्तुतसंपादनोपयुक्तानां सप्तानामपि प्रतीनाम्–एकस्यामपि प्रतौ नोपलब्धः अतः ज्ञायते यत् विवरणकारदृष्टिसमक्षं प्रस्तुतमुद्रितमूलतः अन्यदेव मूलसूत्रपुस्तकम् आसीत् यदनुसारि एतद्विवरणम्।

रायपसेणइयं।

॥२०२॥

[११८] [1]सूरियाभस्स णं देवविमाणस्स [2]अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते, तंजहा–वणसंडविहूणे जाव बहवे वेमाणिया देवा देवीओ य आसयंति जाव [कं० ११६] विहरंति, [3]तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स [4]बहुमज्झदेसे एत्थ णं [5]महेगे [6]उवगारियालयणे पण्णत्ते,

'उवगारियालयनम्।

स्वासां स्वासां परिषदां स्वेषां स्वेषामनीकानां स्वेषां स्वेषामनीकाधिपतीनां स्वेषां स्वेषामात्मरक्षाणां 'आहेवच्चं पोरेवच्चं' इत्यादि *प्राग्वत्।

[११८] १ सूर्याभस्य विमानस्य २ अन्तः–मध्यभागे बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, तस्य 'से जहा नाम ए आलिंगपुक्खरे इ वा' इत्यादि यानविमान इव वर्णनं तावद् वाच्यं यावद् मणीनां स्पर्शः [कं० ३३–४०] ३ तस्य च बहुसमरमणीयस्य भूमिभागस्य ४ बहुमध्यदेशभागे अत्र ५ सुमहत् ६ उपकारिकालयनं प्रज्ञप्तं, विमानाधिपतिसत्कप्रासादावतंसकादीन् उपकरोति–उपष्टम्नात्युपकारिका–विमानाधिपतिसत्कप्रासादावतंसकादीनां पीठिका, अन्यत्र त्वियम्–'उपकार्योपकारिका' इति प्रसिद्धा, उक्तं च–"गृह-

५

*" 'आहेवच्चं पोरेवच्चं' इत्यादि प्राग्वत्" अनेन अतिदेशवाक्येन विवरणकारः सूचयति यत् 'आहेवच्चं' इत्यादिपदावलिः पूर्वपाठे समागता परंतु एतावत्पर्यन्तं मुद्रितासु सर्वासु कण्डिकासु विवरणकारेण अतिदिष्टा पदावलिर्न क्वापि समायाता अतः प्रस्तुतमुद्रितमूलपाठाद् विवरणकारलब्धमूलपाठे भेदः स्पष्ट एव। अतिदिष्टा पदावलिः [औप० पृ० ७४ पं० १३ गतपाठेन] इत्थं पूरणीया–"पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महया" अहयनट्ट.....[पृ० ४६ पं० १–] विहरति। आहेवच्चं–आधिपत्यम्। पोरेवच्चं–पुरोवर्तित्वम्–अग्रेसरत्वम्। भट्टित्तं–भर्तृत्वम्। सामित्तं–स्वामित्वम्। महत्तरगत्तं–महत्तरत्वम्। आणाईसरसेणावच्चं–आज्ञेश्वरसेनापत्यम्। कारेमाणे–कारयन्। पालेमाणे–पालयन्"।

१०

ँएगं जोयणसयसहस्सं आयामविक्खंभेणं ँतिण्णि जोयणसयसहस्साइं सोलस सहस्साइं दोण्णि य सत्तावीसं जोयणसए तिन्नि य कोसे अट्ठावीसं च धणुसयं तेरस य अंगुलाइं अद्धंगुलं च किंचिविसेसूणं परिक्खेवेणं, ँजोयणं बाहल्लेणं, ँसव्वजंबूणयामए अच्छे जाव पडिरूवे।

[११९] ँसे णं ँएगाए पउमवरवेइयाए ँएगेण य वणसंडेण य ँसव्वतो ँसमंता संपरिखित्ते, सा॑= णं पउमवरवेइया ँअद्धजोयणं उड्ढं उच्चत्तेणं ँपंच धणुसयाइं विक्खंभेणं ँउवकारियलेणसमा परिक्खेवेणं,

स्थानं स्मृतं राज्ञामुपकार्योपकारिका" × [ ] इति, उपकारिका लयनमिव उपकारिकालयनं, ७ तद् एकं योजनशतसहस्रमायाम-विष्कम्भाभ्यां ८ त्रीणि योजनशतसहस्राणि + षोडश सहस्राणि द्वे योजनशते सप्तविंशत्यधिके अष्टाविंशं धनुःशतं त्रयोदश अङ्गुलान्यर्द्धाङ्गुलं परिक्षेपतः, इदं च परिक्षेपप्रमाणं जम्बूद्वीपपरिक्षेपपरिमाणवत् क्षेत्रसमासटीकातः परिभावनीयम्। ९ एकं योजनं बाहल्येन पिण्डेन १० सर्वात्मना जाम्बूनदमयम् 'अच्छे' इत्यादि विशेषणजातं प्राग्वत् [पृ० १९ पं० ५]।

[११९] १ तच्च= २ एकया पद्मवरवेदिकया ३ एकेन वनखण्डेन ४ सर्वतः–सर्वासु दिक्षु ५ समन्ततः–सामस्त्येन सम्यक् परिक्षिप्तम्, ६ सा पद्मवरवेदिका ७ अर्द्धं योजनमूर्ध्वमुच्चस्त्वेन ८ पञ्च धनुःशतानि विष्कम्भतः परिक्षेपेण–९ उपकारिकालयनसमाना–

= अयमेव संपूर्णः कण्डिकापाठः अक्षरशो विद्यते जीवा० सू० पृ० १७९ प्र० पं० १–पृ० १८० प्र० पं० ८। × "सौधोऽस्त्री राजसदनम् उपकार्योपकारिका"–[अमर० द्वि० कां० पुरवर्ग श्लो० १०। हैमअभिधान० कां० ४ श्लो० ५९] +–णि द्वयो योजनशते–भा० १।
= अयमेव च संपूर्णः टीकाकण्डिकापाठः अक्षरशो विद्यते जीवा० सू० पृ० १८० प्र० पं० ९–पृ० १८३ पं० ७। विशेषस्तु–अत्र यः टीकापाठः

रायपसेणइयं।

॥२०४॥

[10]तीसे णं पउमवरवेइयाए [11]इमेयारूवे वण्णावासे पण्णत्ते, तंजहा–[12]वयरामया [पृ० ७८ तथा पृ० १५७ पं० ३–पृ० १५९ पं० २] सुवण्णरुप्पमया फलया णाणामणिमया [13]कलेवरा णाणामणिमया [14]कलेवरसंघाडगा णाणामणिमया [15]रूवा णाणामणिमया [16]रूवसंघाडगा अंकामया [पृ० १५९ पं० २–] उवरिपुञ्छणी सव्वरयणामए अच्छायणे, [17]सा णं पउमवरवेइया [18]एगमेगेणं हेमजालेणं ×[19]ए० गवक्खजालेणं [20]ए० खिंखिणीजालेणं [21]ए० घंटाजालेणं

उपकारिकालयनपरिक्षेपपरिमाणा प्रज्ञप्ता, १० तस्याः–पद्मवरवेदिकायाः ११ अयमेतद्रूपो वर्णावासो वर्णः–श्लाघा यथावस्थितस्वरूपकीर्तनम् तस्यावासो–निवासो ग्रन्थपद्धतिरूपो वर्णावासः–वर्णकनिवेश इत्यर्थः, प्रज्ञप्तो मया शेषतीर्थकरैश्च 'तद्यथा' इत्यादिना तमेव दर्शयति, इह सूत्रपुस्तकेष्वन्यथाऽतिदेशबहुलः पाठो दृश्यते ततो मा भूद् मतिसंमोह इति विनेयजनानुग्रहाय पाठ उपदर्श्यते–१२ 'वयरामया [पृ० ७८ पं० ८ तथा पृ० १५७ पं० ५, पृ० १६१ पं० ९] सुवन्नरुप्पमया फलया नानामणिमया कडेवरा णाणामणिमया कलेवरसंघाडगा नानामणिमया रूवा नानामणिमया रूवसंघाडगा अंकामया [पृ० १५९ पं० १०] उवरिपुंछणी सव्वरयणामए अच्छायणे' एतत् सर्वं द्वारवत् भावनीयं, नवरम्–१३ कलेवराणि–मनुष्यशरीराणि १४ कलेवरसंघाटाः–मनुष्यशरीरयुग्मानि १५ रूपाणि–रूपकाणि १६ रूपसंघाटाः–रूपकयुग्मानि, १७ सा एवंस्वरूपा पद्मवरवेदिका तत्र तत्र प्रदेशे १८ एकैकेन हेमजालेन–सर्वात्मना हेममयेन लम्बमानेन दामसमूहेन १९ एकैकेन गवाक्षजालेन गवाक्षाकृतिरत्नविशेषदामसमूहेन २० एकैकेन किङ्किणीजालेन, किङ्किण्यः–क्षुद्रघण्टिकाः, २१ एकैकेन घण्टाजालकेन–किङ्किण्यपेक्षया किंचिन्महत्यो घण्टाः घण्टाः,

५

१०

स्थूलाक्षरैर्मुद्रितः स तत्र न विद्यते। × 'ए' अक्षरेण 'एगमेगेणं' पदं बोध्यम्।

[22]एं० मुत्ताजालेणं [23]एं० मणिजालेणं [24]एं० कणगजालेणं [25]एं० रयणजालेणं [26]एं० पउमजालेणं [27]सव्वतो [28]समंता [29]संपरिक्खित्ता, [30]ते णं जाला+ तवणिज्जलंबूसगा जाव [पृ० १०१ पं० ५-पृ० १०२ पं० ७] चिट्ठंति। तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे तहिं तहिं बहवे [31]हयसंघाडा [पृ० १७२ पं० १] जाव उसभसंघाडा सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा पासादीया जाव वीहीतो पंतीतो मिहुणाणि [32]लयाओ [पृ० १७२ पं० २-पृ० १७३ पं० १]

[33]से [34]केणट्ठेणं [35]भंते! [36]एवं वुच्चति-[37]पउमवरवेइया '[38]पउमवरवेइया'? ५

तथा २२ एकैकेन मुक्ताजालेन-मुक्ताफलमयेन दामसमूहेन २३ एकैकेन मणिजालेन-मणिमयेन दामसमूहेन २४ एकैकेन कनकजालेन-कनकः-पीतरूपः सुवर्णविशेषः तन्मयेन दामसमूहेन एवम्-२५ एकैकेन रत्नजालेन २६ एकैकेन पद्मजालेन सर्वरत्नमयपद्मात्मकेन दामसमूहेन २७सर्वतः सर्वासु दिक्षु २८समन्ततः-सर्वासु विदिक्षु २९परिक्षिप्ताः-व्याप्ताः। एतानि च दामसमूहरूपाणि हेमजालादीनि जालानि लम्बमानानि वेदितव्यानि, तथा चाह-३० तानि हेमजालादीनि जालानि, क्वचित् ='दामा'इति पाठः, तत्र तावत् हेमजालादिरूपा दामान इति, 'तवणिज्जलंबूसगा' इत्यादि [पृ० १०१ पं० ५-पृ० १०२ पं० ७ तथा पृ० १६३ पं० ३, १०] १० ३१ हयसंघाटादिसूत्रम् [पृ० १७२ पं० ४] ३२ लतासूत्रं च प्राग्वत् [पृ० १८ पं० १० तथा पृ० १४ पं० १३]।

सम्प्रति पद्मवरवेदिकाशब्दप्रवृत्तिनिमित्तं जिज्ञासुः पृच्छति-३३ 'से' शब्दः 'अथ' शब्दार्थे, अथ ३४ केनार्थेन-केन कारणेन ३५ भदन्त! ३६ एवमुच्यते-३७पद्मवरवेदिका ३८ 'पद्मवरवेदिका'इति-किमुक्तं भवति?-'पद्मवरवेदिका' इत्येवंरूपस्य शब्दस्य तत्र प्रवृत्तौ

+ 'जालाणि' इति वक्तव्ये 'जाला' इति "सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात् प्राकृते हि लिङ्गमनियतम्"-राय० वि०।

गोयमा[३९]! पउम[४०]वरवेइयाए णं तत्थ[४१] तत्थ देसे तहिं[४२] तहिं वेइयासु[४३] वेइयाबाहासु[४४] य वे×इयफलतेसु य वेइयपु[४५]-
डंतरेसु य खंभेसु[४६] खंभबाहासु[४७] खंभसीसेसु[४८] खंभपुडंतरेसु[४९] सूईसु[५०] सूईमुहेसु[५१] सूईफलएसु[५२] सूईपुडंतरेसु[५३] पक्खेसु[५४]
पक्खबाहासु[५५] ○पक्खपेरंतेसु ○पक्खपुडंतरेसु बहुयाइं[५६] उप्पलाइं[५७] पउमाइं[५८] कुमुयाइं[५९] णलिणाणि[६०] सुभगाइं[६१] सोगं-
धियाइं[६२] पुंडरीयाइं[६३] महापुंडरीयाणि[६४] सयवत्ताइं[६५] सहस्सवत्ताइं[६६]

किं निमित्तम्? इति, एवमुक्ते भगवानाह–३९ गौतम! ४०पद्मवरवेदिकायां ४१तत्र तत्र एकदेशे तस्यैव देशस्य ४२तत्र तत्र एकदेशे ४३ वेदिकासु–उपवेशनयोग्यमत्तवारणरूपासु ४४वेदिकाबाहासु–वेदिकापार्श्वेषु ४५द्वे वेदिके वेदिकापुटं तेषामन्तराणि–अपान्तरालानि तानि वेदिकापुटान्तराणि तेषु, तथा ४६ स्तम्भेषु सामान्यतः ४७स्तम्भबाहासु–स्तम्भपार्श्वेषु ४८स्तम्भशीर्षेषु ४९ द्वौ स्तम्भौ स्तम्भपुटं तेषामन्तराणि स्तम्भपुटान्तराणि तेषु ५० सूचीषु–फलकसम्बन्धविघटनाभावहेतुपादुकास्थानीयासु तासामुपरि इति तात्पर्यार्थः, ५१यत्र प्रदेशे सूची फलकं भित्त्वा मध्ये प्रविशति तत्प्रत्यासन्नो देशः सूचीमुखं तेषु, तथा ५२ सूचीफलकेषु सूचीभिः सम्बन्धिनो ये फलकप्रदेशास्तेप्युपचारात् सूचिफलकानि तेषु सूचीनामधउपरिवर्त्तमानेषु, ५३ द्वे सूच्यौ सूचीपुटं तदन्तरेषु, ५४ पक्षाः ५५पक्षबाहाः वेदिकैकदेशविशेषास्तेषु, ५६ बहूनि ५७ उत्पलानि गर्दभकानि [पृ०२१ पं० १०] ५८ पद्मानि–सूर्यविकासीनि ५९ कुमुदानि–चन्द्रविकासीनि ६० नलिनानि–ईषद्रक्तानि पद्मानि ६१ सुभगानि–पद्मविशेषरूपाणि ६२ सौगन्धिकानि–कल्हाराणि ६३ पुण्डरीकाणि–सिताम्बुजानि ६४ तान्येव महान्ति महापुण्डरीकाणि ६५ शतपत्राणि–पत्रशतकलितानि ६६ सहस्रपत्राणि–पत्रसहस्रोपेतानि, शतपत्र–

५

१०

× वि० बा०। ○ वि० बा०।

'पद्मवरवे
दिका'
शब्दस्या

रायपसेण इयं।

[65]सव्वरयणामयाइं अच्छाइं पडिरूवाइं [68]महया [69]वासिकछत्तसमाणाइं पण्ण[70]त्ताइं [71]समणाउसो ! [72]से ए[73]एणं अट्ठेणं गोय[74]मा ! [75]एवं वुच्चइ-पउम[76]वरवेइया 'पउमवरवेइया'।

पउ[77]मवरवेइया णं भंते ! किं [79]सासया [80]असासया ? गोय[81]मा ! सि[82]य सासया सि[83]य असासया। [84]से केणट्ठेणं भंते ! एवं वुच्चइ-सिय *सासया सिय असासया ? गोय[85]मा ! द[86]व्वट्ठयाए सासया, व[87]ण्णपज्जवेहिं गंधपज्जवेहिं रस-

सहस्रपत्रे च पद्मविशेषौ पत्रसंख्याविशेषाच्च पृथगुपात्ते, एतानि ६७ सर्वरत्नमयानि 'अच्छाइं' इत्यादि विशेषणजातं प्राग्वत् [पृ० १९ पं० ५]६८ महान्ति-महाप्रमाणानि ६९वार्षिकाणि-वर्षाकाले पानीयरक्षार्थं यानि कृतानि वार्षिकाणि तानि च तानि छत्राणि च तत्समानानि ७० प्रज्ञप्तानि हे ७१ श्रमण ! हे आयुष्मन् ! ७२ तद् ७३ एतेन अर्थेन-अन्वर्थेन ७४ गौतम ! ७५एवमुच्यते-७६ 'पद्मवरवेदिका' इति, तेषु तेषु यथोक्तरूपेषु प्रदेशेषु यथोक्तरूपाणि पद्मानि पद्मवरवेदिकाशब्दस्य प्रवृत्तिनिमित्तमिति भावः, व्युत्पत्तिस्त्वेवं-पद्मवरा-पद्मप्रधाना वेदिका पद्मवरवेदिका-इति। ७७पद्मवरवेदिका ७८किं ७९ शाश्वती उत ८० अशाश्वती-किं नित्या उत अनित्या? इति भावः, भगवानाह-८१गौतम ! ८२ =स्यात् शाश्वती ८३ स्यात्-अशाश्वती-कथंचिन्नित्या कथञ्चिदनित्या इत्यर्थः, ८४ प्रश्नसूत्रं सुगमम् । भगवानाह-८५ गौतम ! ८६ द्रव्यार्थतया-द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिकनयो हि द्रव्यमेव तात्त्विकमभिमन्यते न पर्यायान्, द्रव्यं चान्वयि परिणामित्वात् अन्वयित्वाच्च सकलकालभावि इति भवति द्रव्यार्थतया शाश्वती, ८७वर्णपर्यायैः-

५

१०

* "'सासया' इति +आदन्ततया सूत्रे निर्देशः प्राकृतत्वात्"-राय० वि०। = " 'स्यात्' शब्दो निपातः-'कथंचित्' इति एतदर्थवाची"-राय० वि०।

+ आद्यन्त-भा०।

पद्मवरवे[dika] काया नित्या[नि]त्यत्वम्

॥२०७

पज्जवेहिं फासपज्जवेहिं असासया, से एएणट्ठेणं गोयमा ! एवं वुच्चति सिय सासया सिय असासया। पउम-वरवेइया णं भंते ! कालओ केवच्चिरं होइ ? गोयमा ! ण कयावि णासि ण कयावि णत्थि ण कयावि न भविस्सइ, भुविं च हवइ य भविस्सइ य,

तत्तदन्यसमुत्पद्यमानवर्णविशेषरूपैः, एवं गन्धपर्यायैः रसपर्यायैः स्पर्शपर्यायैः उपलक्षणमेतत् तत्तदन्यपुद्गलविचटनोच्चटनैश्च ८८ अशाश्वती किमुक्तं भवति ?–पर्यायास्तिकनयमतेन पर्यायप्राधान्यविवक्षायाम्–अशाश्वती, पर्यायाणां प्रतिक्षणभावितया कियत्काल भावितया विनाशित्वात् , ८९ 'से एएणट्ठेणं' इत्याद्युपसंहारवाक्यं सुगमम् । ५

इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थमेवमाह–नात्यन्तासत उत्पादः नापि सतो नाशः "नासतो विद्यते भावो नाभावो विद्यते सतः" [ भग० गी० अ० २ श्लो०१६ ] इति वचनात्, यौ तु दृश्येते प्रतिवस्तु उत्पाद–विनाशौ तद् आविर्भावतिरोभावमात्रम् यथा सर्पस्य उत्फणत्व–विफणत्वे, तस्मात् सर्वं वस्तु नित्यमिति, एवं च तन्मतचिन्तायां संशयः–किं घटादिवत् द्रव्यार्थतया शाश्वती उत सकलकालमेकरूपा–इति ? ततः संशयापनोदार्थं भगवन्तं भूयः पृच्छति–९०पद्मवरवेदिका प्राग्वत् [पृ० २०६ पं० ५] ९१भदन्त ! ९२ कालतः ९३ कियच्चिरं–कियन्तं कालं यावद् ९४ भवति–एवंरूपा हि कियन्तं कालमवतिष्ठति इति ? भगवानाह–९५ गौतम ! ९६ न कदाचिन्नासीत् सर्वदैवासीदिति भावः अनादित्वात् , तथा ९७ न कदाचिन्न भवति, सर्वदैव वर्तमानकालचिन्तायां भवतीति भावः सदैव भावात् , तथा ९८न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रतिपत्तव्यं, अपर्यवसितत्वात्, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्वं प्रतिपादयति–९९ अभूच्च १०० भवति च १०१ भविष्यति चेति, १०

रायपसेण-इयं।

धुवा[१०२] णियया[१०३] सासया[१०४] अक्खया[१०५] अव्वया[१०६] अवट्ठिया[१०७] णिच्चा[१०८] पउमवरवेइया।

[१२०] सा[१] णं पउमवरवेइया एगेणं[२] वणसंडेणं सव्वओ[३] समंता संपरिक्खित्ता। से[४] णं वणसंडे देसूणाइं[५] दो जोयणाइं चक्कवालविक्खंभेणं[६] उवयारियालेणसमे[७] परिक्खेवेणं वणसंडवण्णतो[८]+ भाणितव्वो जाव [पृ० १८३ पं० २–कं० ११६] विहरंति।

---

एवं त्रिकालावस्थायित्वात् १०२ ध्रुवा मेर्वादिवत् १०३ ध्रुवत्वादेव सदैव स्वस्वरूपनियता १०४नियतत्वादेव च शाश्वती–शश्वद्भवन-स्वभावा १०५ शाश्वतत्वादेव च सततं गङ्गासिन्धुप्रवाहप्रवृत्तावपि पौण्डरीकह्रद इवानेकपुद्गलविचटनेऽपि तावन्मात्रान्यपुद्गलोचटनसंभवादक्षया, न विद्यते क्षयो–यथोक्तस्वरूपाकारपरिभ्रंशो यस्याः सा अक्षया, १०६ अक्षयत्वादेव अव्यया–अव्ययशब्दवाच्या मनागपि स्वरूपचलनस्य जातुचिदप्यभावात्, १०७ अव्ययत्वादेव सदैव स्वप्रमाणेऽवस्थिता मानुषोत्तराद् बहिः समुद्रवत्, १०८ एवं च स्वप्रमाणे सदावस्थानेन चिन्त्यमाना नित्या धर्मास्तिकायादिवत्। ५

[१२०] १ सा पद्मवरवेदिका २ एकेन वनखण्डेन ३ सर्वतः समन्तात् परिक्षिप्ता, ४ स च वनखण्डो ५ देशोने द्वे योजने ६ चक्रवालविष्कम्भतः–७परिक्षेपतः उपकारिकालयनपरिक्षेपपरिमाणो, ८वनखण्डवर्णकः 'किण्हे किण्होभासे'...इत्यादिरूपः समस्तोऽपि प्राग्वत् [पृ० ९ पं० २ तथा पृ० १८३ पं० २] यावद् विहरन्ति। १०

---

+ वनखण्डवर्णकविषयः सविस्तरः पाठः जीवा० सू० पृ० १८३–१९७।

[१२१] तस्स× णं उवयारियालेणस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पण्णत्ता. वण्णओ. तोरणा झया छत्ताइच्छत्ता [पृ० ७८ पं० २]। तस्स णं उवयारियालयणस्स उवरिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव मणीणं फासो [कं० ३३-४०]।

[१२२] तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महेगे मूलपासायवडेंसए पण्णत्ते, से णं मूलपासायवडिंसते पंच जोयणसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं अब्भुग्गयमूसिय-वण्णतो [पृ० १६९ पं० ३] भूमिभागो [पृ० ८१ पं० ३] उल्लोओ [पृ० ९७ पं० ३] सीहासणं सपरिवारं ५

[१२१] १ तस्य-उपकारिकालयनस्य २ चतुर्दिशि-चतसृषु दिक्षु एकैकस्यां दिशि एकैकभावेन चत्वारि ३ त्रिसोपानप्रतिरूपकाणि-प्रतिविशिष्टरूपकाणि त्रिसोपानानि प्रज्ञप्तानि, त्रिसोपानवर्णको यानविमानवत् वक्तव्यः [पृ० ७८ पं ७-] तेषां च त्रिसोपानप्रतिरूपकाणां पुरतः प्रत्येकमेकैकं तोरणं, तोरणवर्णकोऽपि तथैव [पृ० ७९ पं० ३,६] ४ तस्य उपकारिकालयनस्य 'बहुसमरमणिज्जे भूमिभागे' इत्यादिना भूमिभागवर्णनकं यानविमानवर्णनवत् तावद् वाच्यं यावद् मणीनां स्पर्शः[पृ० ८१ पं० ११-पृ० ९४ पं० ५]। १०

[१२२] १ तस्य च बहुसमरमणीयस्य भूमिभागस्य २ बहुमध्यदेशभागे अत्र ३ महानेको ४ मूलप्रासादावतंसकः प्रज्ञप्तः, ५स च ६ पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन ७ अर्द्धतृतीयानि योजनशतानि विष्कम्भतः ८ तस्य वर्णनम् मध्येभूमिभागवर्णनम् उल्लोकव-

× इदमपि सविस्तरं मूलं जीवा० सू० पृ० २२१ प्र० पं० ५।

रायपसेणइयं।

भाणियव्वं [पृ० १०२ पं० ४-] अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता। [1]से णं मूलपासायवडेंसगे अण्णेहिं चउहिं पासायवडेंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वतो समंता संपरिखित्ता, ते णं पासायवडेंसगा अड्ढाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं पणवीसं जोयणसयं विक्खंभेणं जाव वण्णओ [पृ०१६९ पं० ३-] [13]ते णं पासायवडिंसया

र्णनं द्वारबहिःस्थितप्रासादवद् भावनीयम् [पृ० १६९ पं० ९] तस्य* च मूलप्रासादावतंसकस्य बहुमध्यदेशभागेऽत्र महती एका मणिपीठिका प्रज्ञप्ता, अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्यतः सर्वात्मना मणिमयी 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत् [पृ० १९ पं० ५]। 8'तीसे णं' इत्यादि, तस्याश्च मणिपीठिकाया उपरि महदेकं सिंहासनं प्रज्ञप्तं, तस्य सिंहासनस्य वर्णनं, परिवारभूतानि शेषाणि भद्रासनानि प्राग्वद् वक्तव्यानि [पृ० १०२ पं० ९] ९ स मूलप्रासादावतंसकः १० अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः सर्वतः समन्ततः परिक्षिप्तः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-११ अर्द्धतृतीयानि योजनशतान्यूर्ध्वमुच्चैस्त्वेन, १२ पञ्चविंशं योजनशतं विष्कम्भेन, तेषामपि स्वरूपवर्णनं मध्यभूमिभागवर्णनमुल्लोकवर्णनं च प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३-पृ० ९७ पं० ३-] तेषां च प्रासादावतंसकानां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं सिंहासनं प्रज्ञप्तं, तेषां च सिंहासनानां वर्णनं प्राग्वत् [पृ० १०२ पं० ९ पृ० ९८ पं० ३] नवरमत्र शेषाणि परिवारभूतानि⌐ वक्तव्यानि, १३ ते प्रासादावतंसका

५ ॥२११॥ १०

*'तस्य' इत्यादिकस्य मणिपीठिकासंबन्धिनः विवरणस्य मूलं न प्रतिभाति। 8" 'तीसे णं' इत्यादि " प्रतीकदर्शनाद् अत्र प्रस्तुतमूलपाठ-विवरणकारलब्धमूलपाठयोर्भेदः प्रतीयते। ⌐-नि भद्रासनानि ब०-भा० २।

[३४]अण्णेहिं चउहिं पासायवडिंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वओ समंता संपरिक्खित्ता, [१५]ते णं पासायवडेंसया [१६]पणवीसं जोयणसयं उड्ढं उच्चत्तेणं [१७]बासट्ठिं जोयणाइं अद्धजोयणं च विक्खंभेणं अब्भुग्गयमूसिय-[पृ० १६९ पं० ३] वण्णओ भूमिभागो [पृ० ८१ पं ३]। उल्लोओ [पृ० ९७ पं० ३] सीहासणं [१८]सपरिवारं भाणियव्वं [पृ० १०२ पं० ४-] अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता. [१९]ते णं पासायवडेंसगा [२०]अण्णेहिं चउहिं पासायवडेंसएहिं तदद्धुच्चत्तपमाणमेत्तेहिं सव्वतो समंता संपरिक्खित्ता, [२१]ते णं पासायवडेंसगा [२२]बासट्ठिं जोयणाइं अद्धजोयणं च उड्ढं उच्चत्तेणं [२३]एकतीसं जोयणाइं कोसं च विक्खंभेणं वण्णओ उल्लोओ सीहासणं○ सपरिवारं ५

१४ अन्यैश्चतुर्भिः प्रासादावतंसकैः तेषां मूलप्रासादावतंसकानां यदर्द्धं तदुच्चत्वप्रमाणमात्रैः-मूलप्रासादावतंसकापेक्षया चतुर्भागमात्रप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-१५ ते प्रासादावतंसकाः १६ पञ्चविंशं योजनशतमूर्ध्वमुच्चैस्त्वेन १७द्वाषष्टिर्योजनानि अर्द्धयोजनं च विष्कम्भतः, तेषामपि स्वरूपवर्णनम् मध्यभागभूमिवर्णनम्-उल्लोकवर्णनम् सिंहासनवर्णनं÷ च सर्वं प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३-पृ० ९७ पं०३ पृ० ९८ पं० ३] केवलमत्रापि सिंहासनं १८ सपरिवारं वक्तव्यम्। १९ ते च प्रासादावतंसका २० अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया अष्टभागप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-२१ ते च प्रासादावतंसका २२ द्वाषष्टिर्योजनानि अर्धयोजनं च ऊर्ध्वमुच्चैस्त्वेन २३ एकत्रिंशतं योजनानि क्रोशं च विष्कम्भतः, एषामपि स्वरूपवर्णनम् मध्यभागभूमिवर्णनम् उल्लोक- १०

○-णं अपरि-भा० १। ÷-नम् परिवाररहितं प्राग्वत् ते च-भा० १।

पासाय०उवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता ।

वर्णनम् सिंहासनवर्णनं च परिवाररहितं प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३-पृ० ९७ पं० ३ पृ० ९८ पं० ३ पृ० १०२ पं ९] ते+ऽपि प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः-अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया षोडशभागप्रमाणैः सर्वतः समंतात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-एकत्रिंशतं योजनानि क्रोशं च ऊर्ध्वमुच्चैस्त्वेन पञ्चदश योजनानि अर्द्धतृतीयांश्चैव क्रोशान् विष्कम्भतः । एतेषामपि स्वरूपादिवर्णनमनन्तरोक्तम् [प्र० पृ० पं० २] तेऽपि च प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः-अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-पञ्चदश योजनानि अर्द्धतृतीयांश्च क्रोशान् ऊर्ध्वमुच्चैस्त्वेन देशोनान्यष्टौ योजनानि विष्कम्भेन, एषामेव स्वरूपव्यावर्णनं भूमिभागवर्णनम् उल्लोकवर्णनं सिंहासनवर्णनं च परिवारवर्जितं प्राग्वत् [प्र० पृ० पं० २]



\+ प्रस्तुतसंपादनोपयुक्तेषु एकस्मिन्नपि लिखितादर्शे अतः आरभ्य कण्डिकासमाप्तिपर्यन्तस्य विवरणस्य मूलपाठो न लभ्यते एवमेव च मु० पुस्तकेऽपि, अत एवात्र विवरणकारलब्धमूलपाठ-प्राप्तादर्शमूलपाठयोर्भेदः । स च अलभ्यमानो मूलपाठः श्रीजीवाजीवाभिगमसूत्रे प्रस्तुतान्यप्रसङ्गेऽपि एवमुपलभ्यते-"ते णं पासायवडिंसगा एक्कतीसं जोयणाइं कोसं च उड्ढं उच्चत्तेणं, अद्धसोलसजोयणाइं अद्धकोसं च आयामविक्खंभेणं...ते णं पासायवडिंसगा अद्धसोलस जोयणाइं अद्धकोसं च उड्ढं उच्चत्तेणं देसूणाइं अट्ठ जोयणाइं आयामविक्खंभेणं...पृ० २२१ पं० २-८। तद्विवरणं चैवम्-"तदर्धोच्चत्वप्रमाणमेव दर्शयति-एकत्रिंशतं योजनानि क्रोशं चैकमूर्ध्वमुच्चैस्त्वेन, पञ्चदश योजनानि अर्धतृतीयांश्च क्रोशान् आयाम-विष्कम्भाभ्याम्......तदर्धोच्चत्वप्रमाणमेव दर्शयति-पञ्चदश योजनानि अर्धतृतीयांश्च क्रोशान् ऊर्ध्वमुच्चैस्त्वेन देशोनानि अष्टौ योजनानि आयाम-विष्कम्भाभ्याम्"-जीवा० वृ० पृ० २२३ प्र० पं० ११-पृ० २२३ पं० ४।

[१२३]—त[1]स्स णं मूलपासायवडेंसयस्स उत्तर[2]पुरत्थिमेणं एत्थ णं [3]सभा सुहम्मा पण्णत्ता, [4]एगं जोयणसयं आयामेणं प[5]ण्णासं जोयणाइं विक्खम्भेणं बा[6]वत्तरिं जोयणाइं उड्ढं उच्चत्तेणं [7]अणेगखम्भ...जाव अच्छरगण... पासादीया [पृ० ९४ पं० ३–पृ० ९७ पं० १] स[8]भाए णं सुहम्माए [9]तिदिसिं [10]तओ दारा पण्णत्ता, [11]तंजहा–पुरत्थि[12]मेणं [13]दाहिणेणं उ[14]त्तरेणं. [15]ते णं दारा सो[16]लस जोयणाइं उड्ढं उच्चत्तेणं [17]अट्ठ जोयणाइं विक्खम्भेणं [18]तावतियं चेव पवेसेणं से[19]या वरकणगथूभियागा जाव वणमालाओ, [तेसि* णं दाराणं उवरिं अट्ठट्ठ मङ्गलगा झया छत्ताइछत्ता] [20]तेसि णं दाराणं पुरओ ५

---

[१२३] १ तस्य मूलप्रासादावतंसकस्य २ उत्तरपूर्वस्यामीशानकोणे इत्यर्थः, अत्र ३ सभा सुधर्मा प्रज्ञप्ता, सुधर्मा नाम विशिष्टच्छन्दकोपेता, सा ४ एकं योजनशतमायामतः ५ पञ्चाशत् योजनानि विष्कम्भतः ६ द्वासप्ततिर्योजनानि ऊर्ध्वमुच्चैस्त्वेन, कथंभूता सा ? इत्याह–७अनेक....कञ्चणमणिरयणथूभियागा नानाविहपञ्चवण्णघण्टापडागपरिमण्डियग्गसिहरा [पृ० ९४ पं० ८–पृ०९७ पं० ९] अच्छा जाव पडिरूवा' इति प्राग्वत् । ८ सभायाश्च सुधर्मायाः ९ त्रिदिशि तिसृषु दिक्षु एकैकस्यां दिशि एकैकद्वारभावेन १० त्रीणि द्वाराणि प्रज्ञप्तानि, ११तद्यथा–एकं १२ पूर्वस्याम् एकं १३ दक्षिणस्याम् एकम् १४उत्तरस्याम् १५तानि च द्वाराणि प्रत्येकं १६षोडश षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन १७ अष्टौ योजनानि विष्कम्भतः १८ तावन्त्येवाष्टौ योजनानीति भावः प्रवेशेन, १९ 'सेया वरकणगथूभियागा' इत्यादि प्रागुक्तद्वारवर्णनं तदेव तावद् वक्तव्यं यावत् वनमालाः [पृ० १५६ पं० ५–पृ० १६८ पं० ३] इति, २० तेषां १०

---

* अस्यां कण्डिकायाम्–[ ] एतच्चिह्नान्तर्गतः पाठः वि० बा० ।

पेत्तेयं[21] पत्तेयं मुहमंडवे[22] पण्णत्ते, [23]ते णं मुहमण्डवा एगं[24] जोयणसयं आयामेणं पण्णासं[25] जोयणाइं विक्खंभेणं साइरेगाइं[26] सोलस जोयणाइं उड्ढं उच्चत्तेणं वण्णओ[27] सभाए सरिसो, [तेसि* णं मुहमण्डवाणं तिदिसिं ततो दारा पण्णत्ता, तंजहा–पुरत्थिमेणं दाहिणेणं उत्तरेणं, ते णं दारा सोलस जोयणाइं उड्ढं उच्चत्तेणं अट्ठ जोयणाइं विक्खंभेणं तावइयं चेव पवेसेणं सेया वरकणगथूभियागा जाव वणमालाओ। तेसि णं मुहमंडवाणं भूमिभागा उल्लोया, तेसि णं मुहमंडवाणं उवरिं अट्ठट्ठ मङ्गलगा झया छत्ताइच्छत्ता।] तेसिं[28] णं मुहमंडवाणं पुरतो पेत्तेयं[29] पत्तेयं पेच्छाघरमंडवे[30] पण्णत्ते, मुहमंडववत्तव्वया जाव दारा भूमिभागा उल्लोया। 



[१२४] तेसिं[1] णं बहुसमरमणिज्जाणं भूमिभागाणं बहुमज्झदेसभाए[2] पत्तेयं[3] पत्तेयं वइरामए[4] अक्खाडए

---

च द्वाराणां पुरतः २१ प्रत्येकं प्रत्येकं २२ मुखमण्डपः प्रज्ञप्तः, २३ ते च मुखमण्डपा २४ एकं योजनशतमायामतः २५ पञ्चाशत् योजनानि विष्कम्भतः २६ सातिरेकाणि षोडश योजनानि ऊर्ध्वमुच्चैस्त्वेन, एतेषामपि 'अणेगखम्भसयसन्निविट्ठा' इत्यादि २७ वर्णनं सुधर्मसभाया इव निरवशेषं द्रष्टव्यम् [कं० १२३] २८ तेषां च मुखमण्डपानां पुरतः २९ प्रत्येकं प्रत्येकं ३० प्रेक्षागृहमण्डपः प्रज्ञप्तः, ते च प्रेक्षागृहमण्डपा आयाम–विष्कम्भ–उच्चैस्त्वैः प्राग्वत् [पृ० पं० ] प्रेक्षागृहमण्डपानां च भूमिभागवर्णनं प्राग्वत् तावद् वाच्यं यावद् मणीनां स्पर्शः [ कं० ३३–४० तथा पृ० ९४ पं० ७–] 

[१२४] १ तेषां च बहुसमरमणीयानां भूमिभागानां २बहुमध्यदेशभागे ३प्रत्येकं प्रत्येकं ४वज्रमयोऽक्षपाटकः प्रज्ञप्तः [पृ० ९७

पण्णत्ते, तेसिं णं वयरामयाणं अक्खाडगाणं बहुमज्झदेसभागे पत्तेयं पत्तेयं मणिपेढिया पण्णत्ता, ताओ णं मणिपेढियातो अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ जाव पडिरूवाओ, तासि णं मणिपेढियाणं उवरिं पत्तेयं पत्तेयं सीहासणे पण्णत्ते, सीहासणवण्णओ सपरिवारो, तेसिं णं पेच्छाघरमंडवाणं उवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता, तेसिं णं पेच्छाघरमंडवाणं पुरओ पत्तेयं पत्तेयं मणिपेढियाओ पण्णत्ताओ, ताओ णं मणिपेढियातो सोलस सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ पडिरूवाओ, तासि णं उवरिं

---

पं० १४-] ५ तेषां च वज्रमयानामक्षपाटकानां ६ बहुमध्यदेशभागे ७ प्रत्येकं प्रत्येकं ८ मणिपीठिका प्रज्ञप्ता ९ ताश्च मणिपीठिकाः १० अष्ट योजनान्यायाम-विष्कम्भाभ्यां ११ चत्वारि योजनानि बाहल्येन-पिण्डभावेन १२ सर्वात्मना मणिमय्यः १३ 'अच्छाओ' इत्यादि विशेषणजातं प्रागिव [पृ० ९८ पं० ६]। १४ तासां च मणिपीठिकानामुपरि १५ प्रत्येकं प्रत्येकं १६ सिंहासनं प्रज्ञप्तं, १७ तेषां च सिंहासनानां वर्णनं परिवारश्च प्राग्वद् वक्तव्यः [पृ० ९८ पं० ८] १८ तेषां च प्रेक्षागृहमण्डपानामुपरि १९ अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि प्राग्वत् [पृ० १९ पं० ६-पृ० २० पं० ९] २० तेषां प्रेक्षागृहमण्डपानां पुरतः २१ प्रत्येकं प्रत्येकं २२ मणिपीठिकाः प्रज्ञप्ताः, २३ ताश्च मणिपीठिकाः प्रत्येकं प्रत्येकं २४ षोडश योजनान्यायाम-विष्कम्भाभ्याम् २५ अष्टौ योजनानि बाहल्येन २६ सर्वात्मना मणिमय्यः 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत् [पृ० ९८ पं० ६] २७ तासां

पत्तेयं[२८] पत्तेयं *थूभे[२९] पण्णत्ते, [३०]ते णं *थूभा [३१]सोलस सोलस जोयणाइं आयामविक्खंभेणं [३२]साइरेगाइं सोलस सोलस जोयणाइं उड्ढं उच्चत्तेणं, सेया संखंक...[पृ० १७९ पं० ३] सव्वरयणामया अच्छा जाव पडिरूवा, [३३]तेसि णं थूभाणं उवरिं [३४]अट्ठट्ठ मंगलगा झया छत्तातिछत्ता जाव सहस्सपत्तहत्थया। तेसिं[३५] णं थूभाणं [३६]पत्तेयं पत्तेयं [३७]चउद्दिसिं [३८]मणिपेढियातो पण्णत्ताओ, ताओ णं मणिपेढियातो [३९]अट्ठ जोयणाइं आयामविक्खंभेणं [४०]चत्तारि जोयणाइं बाहल्लेणं [४१]सव्वमणिमईओ अच्छाओ जाव पडिरूवातो, [४२]तासि णं मणिपेढियाणं उवरिं ५

---

च मणिपीठिकानामुपरि २८ प्रत्येकं प्रत्येकं २९ चैत्यस्तूपः प्रज्ञप्तः, ३० ते च चैत्यस्तूपाः ३१ षोडश योजनान्यायाम-विष्कम्भाभ्यां ३२ सातिरेकाणि षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन 'संखंक'-इत्यादि तद्वर्णनं सुगमम्, [पृ० १७९ पं० १२] ३३ तेषां च चैत्यस्तूपानामुपरि ३४ अष्टावष्टौ स्वस्तिकादीनि मङ्गलकानि 'जाव सहस्सपत्तहत्थया' इति 'यावत्' करणात् तेसिं चेइयथूभाणं उप्पिं बहवे किण्हचामरज्झया [पृ० २५ पं० २ तथा पं० ९] तेसिं चेइयथूभाणं उप्पिं बहवे छत्ताइच्छत्ता ...[पृ० २१ पं० १ तथा ५] इति, एतच्च समस्तं प्राग्वत्। ३५ तेषां चैत्यस्तूपानां ३६ प्रत्येकं प्रत्येकं ३७ चतुर्दिशि-चतसृषु दिक्षु एकैकस्यां दिशि एकैकमणिपीठिकाभावेन चतस्रो ३८ मणिपीठिकाः प्रज्ञप्ताः ३९ अष्टौ योजनान्यायामविष्कम्भाभ्यां ४० चत्वारि योजनानि बाहल्येन ४१ सर्वात्मना मणिमय्यः 'अच्छा' इत्यादि प्राग्वत् [पृ० ९८ पं० ६] ४२ तासां च ⊙ मणिपीठिकानामुपरि एकैकप्रतिमाभावेन १०

---

* "चेइयथूभा"-जीवा० पृ० २२४ पं० १४। ⊙ मणिपीठिकानामुपरि एकैकस्या अपि मणिपीठिकाया उपरि एकैक-पा० ४-५।

रायपसेणइयं।

॥११८॥

चत्तारि जिणपडिमातो जिणुस्सेहपमाणमेत्ताओ+ संपलियंकनिसन्नाओ थूभाभिमुहीओ सन्निखित्ताओ चिट्ठंति, तंजहा–उसभा वद्धमाणा चंदाणणा वारिसेणा।

[१२५] तेसिं णं थूभाणं पुरतो पत्तेयं पत्तेयं मणिपेढियातो पण्णत्ताओ, ताओ णं मणिपेढियातो सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमईओ जाव पडिरूवातो, तासिं णं मणिपेढियाणं उवरिं पत्तेयं पत्तेयं चेइयरुक्खे पण्णत्ते, ते णं चेइयरुक्खा अट्ठ जोयणाइं उड्ढं उच्चत्तेणं अद्ध×जोयणं उव्वेहेणं, दो जोयणाइं खंधा अद्धजोयणं विक्खंभेणं छ जोयणाइं विडिमा बहुमज्झदेसभाए

५

४३ चतस्रो ४४ जिनप्रतिमाः ४५ जिनोत्सेधप्रमाणमात्राः जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि सम्भाव्यन्ते, ४६ पर्यङ्कासनसन्निषण्णाः, ४७ स्तूपाभिमुख्यः ४८ सन्निक्षिप्ताः, तथा जगत्स्थितिस्वाभाव्येन सम्यग्निवेशितास्तिष्ठन्ति, ४९ तद्यथा–५० ऋषभाः ५१ वर्द्धमानाः ५२ चन्द्राननाः ५३ वारिषेणाः–इति।

[१२५] १ तेषां चैत्यस्तूपानां पुरतः २ प्रत्येकं प्रत्येकं ३ मणिपीठिकाः प्रज्ञप्ताः, ४ ताश्च मणिपीठिकाः ५ षोडश योजनान्यायामविष्कम्भाभ्याम् ६ अष्टौ योजनानि बाहल्यतः ७ 'सव्वमणिमईओ' इत्यादि प्राग्वत्, [पृ० ९८ पं० ६] ८ तासां च मणिपीठिकानामुपरि ९ प्रत्येकं प्रत्येकं १० चैत्यवृक्षा ११ अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेन १२ अर्द्धयोजनमुद्वेधेन–उण्डत्वेन, १३ द्वे योजने उच्चैस्त्वेन १४ स्कन्धः स एव १५ अर्धं योजनं विष्कम्भतया १८ बहुमध्यदेशभागे १७ विडिमा–ऊर्ध्वं विनिर्गता शाखा सा

१०

+ ओपलियंक–भा० १। × अट्ठ जोयणाइं–मु० पु० पाठः स च विवरणविरोधी।

जिनमति
मानां नाम
ग्राहं वर्णक

रायपसेणइयं।

अट्ठ जोयणाइं ÷आयामविक्खंभेणं साइरेगाइं अट्ठ जोयणाइं सव्वग्गेणं पण्णत्ता, तेसिं णं चेइयरुक्खाणं इमेयारूवे वण्णावासे पण्णत्ते, तंजहा–वयरामयमूलरययसुपइट्ठियविडिमा रिट्ठामयविउलकंदवेरुलियरुइलखंधा सुजायवरजायरूवपढमगविसालसाला नाणामणिमयरयणविविहसाहप्पसाहवेरुलियपत्ततवणिज्जपत्तबिंटा जंबूणयरत्तमउयसुकुमालपवालपल्लववरंकुरधरा विचित्तमणिरयणसुरभिकुसुमफलभरनमियसाला

ऊर्ध्वमुच्चैस्त्वेन १६ पद् योजनानि १९ अष्टौ योजनानि २० विष्कम्भेन २२ सर्वाग्रेण २१ सातिरेकेणाष्टौ योजनानि प्रज्ञप्ताः २३तेषां च चैत्यवृक्षाणाम् २४अयमेतद्रूपो वर्णावासः प्रज्ञप्तः २५तद्यथा–२६वज्राणि–वज्रमयानि मूलानि येषां ते वज्रमयमूला रजते सुप्रतिष्ठिता विडिमा–बहुमध्यदेशभागे ऊर्ध्वं विनिर्गता शाखा येषां ते रजतसुप्रतिष्ठितविडिमाः* २७ रिष्टमयो–रिष्टरत्नमयः कन्दो येषां ते रिष्टमयकन्दाः, तथा वैडूर्यरत्नमयो रुचिरः स्कन्धो येषां ते *तथा, २८ सुजातं–मूलद्रव्यशुद्धं वरं–प्रधानं यत् जातरूपं तदात्मकाः प्रथमका–मूलभूता विशालाः शालाः शाखा येषां ते सुजातवरजातरूपप्रथमकविशालशालाः २९ नानामणिरत्नात्मिका विविधाः शाखाः प्रशाखा येषां ते तथा वैडूर्याणि–वैडूर्यमयाणि पत्राणि येषां ते तथा तपनीयमयानि पत्रवृन्तानि येषां ते ○तथा, ३० जाम्बूनदा–जाम्बूनदसुवर्णविशेषमया रक्ता–रक्तवर्णा मृदवः–मनोज्ञाः सुकुमाराः–सुकुमारस्पर्शाः प्रवालाः–ईषदुन्मीलितपत्रभावाः पल्लवाः–संजातपरिपूर्णप्रथमपत्रभावरूपा वराङ्कुराः–प्रथममुद्भिद्यमाना अङ्कुरास्तान् धरन्तीति जाम्बूनदरक्तमृदुसुकुमारप्रवालपल्लवाङ्कुरधराः ३१ विचि-

÷ नैतत् पदं विवरणे। * "ततः पूर्वपदेन कर्मधारयः समासः"–राय० वि०। ○ "ततः पूर्ववत् पदद्वयमीलनेन कर्मधारयः" –राय० वि०।

चैत्यवृक्षाणां वर्ण

५

॥११९

१०

१५

रायपसेणइयं।

॥१२०॥

सच्छाया[32] सप्पभा[33] सस्सिरीया[34] सउज्जोया[35] अहियं[36] नयण-मणणिव्वुइकरा अमयरससमरसफला[37] पासाईया[38]...। तेसिं[39] णं चेइयरुक्खाणं उवरिं अट्ठट्ठ[40] मंगलगा झया छत्ताइछत्ता। तेसिं[41] णं चेइयरुक्खाणं पुरतो पत्तेयं[42] पत्तेयं मणिपे[43]ढियाओ पण्णत्ताओ, ताओ[44] णं मणिपेढियाओ अट्ठ[45] जोयणाइं आयामविक्खंभेणं चत्तारि[46] जोयणाइं बाहल्लेणं

त्रमणिरत्नमयानि यानि सुरभीनि कुसुमानि फलानि च तेषां भरेण नमिताः शालाः-शाखा येषां ते तथा, तथा ३२ सती-शोभना छाया येषां ते सच्छायाः, ३३ सती-शोभना-प्रभा-कान्तिर्येषां ते सत्प्रभाः, अत एव ३४ सश्रीकाः, तथा ३५ सह उद्द्योतेन वर्त्तन्ते मणिरत्नानामुद्द्योतभावात् सोद्द्योताः, ३६ अधिकं नयन-मनोनिर्वृतिकराः ३७अमृतरससमरसानि फलानि येषां ते तथा, ३८'पासाईया'इत्यादिविशेषणचतुष्टयं प्राग्वत् [पृ०७ पं०१] एते× च चैत्यवृक्षा अन्यैर्बहुभिस्तिलक-लवक-च्छत्रौपग-शिरीष-सप्तपर्ण-दधिपर्ण-लुब्धक-धवल-चन्दन-नीप-कुटज-पनस-ताल-तमाल-प्रियाल-प्रियङ्गु-पारापत-राजवृक्ष-नन्दिवृक्षैः सर्वतः समन्तात् सम्परिक्षिप्ताः, ते च तिलका यावन्नन्दिवृक्षा मूलमन्तः कन्दमन्त इत्यादि सर्वमशोकपादपवर्णनायामिव [पृ० १२ पं० २] तावद् वक्तव्यं यावत् परिपूर्णं लतावर्णनम् [पृ० १२पं० ४] ३९तेषां चैत्यवृक्षाणामुपरि ४०अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि चैत्यस्तूप इव तावद् वक्तव्यं यावद् बहवः सहस्रपत्रहस्तकाः, सर्वरत्नमया यावत् प्रतिरूपका इति [पृ०८७ पं०७]४१ तेषां च चैत्यवृक्षाणां पुरतः ४२ प्रत्येकं ४३ मणिपीठिकाः प्रज्ञप्ताः, ४४ ताश्च मणिपीठिका ४५ अष्टौ योजनान्यायामविष्कम्भाभ्यां ४६ चत्वारि योजनानि बाह-

× अत आरभ्य 'यावत् प्रतिरूपकाः' [पं० ११] इत्यन्तस्य विवरणस्य मूलपाठो मूले न दृश्यते।

सव्वमणिमईओ अच्छाओ जाव पडिरूवाओ, तासि णं मणिपेढियाणं उवरिं पत्तेयं पत्तेयं महिंदज्झए पण्णत्ते, ते णं महिंदज्झया सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं ○अद्धकोसं उव्वेहेणं अद्धकोसं विक्खंभेणं वइरामय-....[पृ०१०९ पं०२]-सिहरा पासादीया। तेसिं णं महिंदज्झयाणं उवरि अट्ठट्ठ मंगलगा झया छत्तातिछत्ता [पृ० ८० पं० ३] तेसिं णं महिंदज्झयाणं पुरतो पत्तेयं पत्तेयं नंदा पुक्खरिणीओ पण्णत्ताओ, ताओ णं पुक्खरिणीओ =एगं जोयणसयं आयामेणं पण्णासं जोयणाइं विक्खंभेणं दसं जोयणाइं उव्वेहेणं ५

ल्यतः ४७ 'सव्व-रयणामईओ' इत्यादि प्राग्वत् [पृ० ९८ पं ६] ४८ तासां च मणिपीठिकानामुपरि ४९ प्रत्येकं ५० महेन्द्रध्वजः प्रज्ञप्तः, ५१ते च महेन्द्रध्वजाः ५२षष्टिर्योजनान्यूर्ध्वमुच्चैस्त्वेन ५३अर्द्धक्रोशम्-अर्द्धगव्यूतमुद्वेधेन-उण्डत्वेन ५४अर्द्धक्रोशं विष्कम्भतः ५५ 'वइरा'...[पृ० १०९ पं० २-८] ५६तेषां महेन्द्रध्वजानामुपरि ५७ अष्टावष्टौ मङ्गलकानि ५८ बहवः कृष्णचामरध्वजा इत्यादि तोरणवत् सर्वं वक्तव्यम् [पृ० ८० पं० ९] ५९ तेषां च महेन्द्रध्वजानां पुरतः ६० प्रत्येकं ६१ नन्दा नन्दाभिधाना पुष्करिणी प्रज्ञप्ता, ६२एकं योजनशतमायामतः ६३पञ्चाशत् योजनानि विष्कम्भतः ६४ ○दश योजनान्युद्वेधेन-उण्डत्वेन, तासां च नन्दापुष्करिणीनां १०

○ अत्र सर्वप्रतिषु मु० पुस्तके च 'जोयणं उव्वेहेणं जोयणं विक्खंभेणं' इति-एव पाठ उपलभ्यते, केवलम् भा० २ प्रतौ 'सट्ठि जोयणाइं उड्ढं उच्चत्तेणं अद्धकोसं उव्वेहेणं, अद्धकोसं विक्खंभेणं' इति लभ्यते परंतु भा० २ प्रतावपि मूलतस्तु 'जोयणं' इत्यादिक एव पाठो दृश्यते, अनन्तरं केनचित् शोधकेन मूल-विवरणयोर्वैषम्यं परिहर्तुकामेन 'जोयणं' स्थाने 'अद्धकोसं' इति परिवर्तितं प्रतिभाति, अस्माभिस्तु मूल-विवरणयोः संवादाय विवरणानुसारी स शोधित एव पाठोऽत्र मूले न्यस्तः। =एगं जोयणाइं विक्खंभेणं दस जोयणाइं उव्वेहेणं पा० १। - मूल-विवरणयोः पाठभेदः। ○ मु० पु० विवरणे तथा पा० ४-५, भा० १ प्रतौ च विवरणे 'द्वासप्ततियोजनानि' इत्येव पाठो लभ्यते किन्तु केवलं १५

अच्छाओ-जाव वण्णओ-एगइयाओ उदगरसेणं पण्णत्ताओ, पत्तेयं पत्तेयं पउमवरवेइयापरिक्खित्ताओ पत्तेयं पत्तेयं वणसंडपरिक्खित्ताओ [पृ० १९१ पं० २] तासि णं णंदाणं पुक्खरिणीणं तिदिसिं तिसोवाणपडिरूवगा पण्णत्ता, तिसोवाणपडिरूवगाणं वण्णओ, तोरणा झया छत्तातिछत्ता। सभाए णं सुहम्माए अडयालीसं मणोगुलियासाहस्सीओ पण्णत्ताओ, तंजहा-पुरत्थिमेणं सोलससाहस्सीओ पचत्थिमेणं सोलससाहस्सीओ दाहिणेणं अट्ठसाहस्सीओ उत्तरेणं अट्ठसाहस्सीओ, तासु णं मणोगुलियासु बहवे सुवण्णरुप्पमया फलगा पण्णत्ता, तेसु णं सुवन्नरुप्पमएसु फलगेसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु णागदंतएसु किण्हसुत्तवट्टवग्घारियमल्लदामकलावा चिट्ठंति, ५

६५ 'अच्छाओ सण्हाओ रययामय'... इत्यादि वर्णनं प्राग्वत् [पृ० १९१ पं० २-७] ताश्च नन्दापुष्करिण्यः प्रत्येकं प्रत्येकं ६६ पद्मवरवेदिकया प्रत्येकं प्रत्येकं ६७ वनखण्डेन परिक्षिप्ताः, ६८ तासां च नन्दापुष्करिणीनां प्रत्येकं ६९ त्रिदिशि ७० त्रिसोपानप्रतिरूपकतोरणवर्णनं प्रागिव [पृ० ७८ पं० ६-पृ० ८१ पं० १०] ७१ सभायां सुधर्म्मायाम् ७२ अष्टचत्वारिंशन्मनोगुलिकासहस्राणि-पीठिकासहस्राणि प्रज्ञप्तानि, ७३तद्यथा-७४पूर्वस्यां दिशि षोडश मनोगुलिकासहस्राणि, ७५षोडश सहस्राणि पश्चिमायाम् ७६अष्टौ सहस्राणि दक्षिणतः ७७ अष्टौ सहस्राणि उत्तरतः, ७९ एतासु च फलक-नागदन्तक-माल्यदामवर्णनं प्राग्वत् [पृ० १७६ पं० २-] सिक्कगवर्णनं १०

भा० २ प्रतावेव 'दश योजनानि' पाठः प्राप्तः स एव च पाठः मूलपाठानुसारी अत एव अत्र स्वीकृतः । विवरणे निर्दिष्टः 'द्वासप्ततियोजनानि' पाठोऽपि विशेषेण विचारणीयोऽस्ति नहि अविमृश्यैव विवरणकारेण एवं निर्देशः कृतो भवेत् ।

रायपसेण-
इयं।

सभाए णं सुहम्माए अडयालीसं गोमाणसियासाहस्सीओ पन्नत्ताओ, जह मणोगुलिया जाव णागदंतगा, तेसु णं णागदंतएसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु णं रययामएसु सिक्कगेसु बहवे वेरुलियामइओ धूवघडियाओ पण्णत्ताओ, ताओ णं धूवघडियाओ कालागुरुपवर-जाव [पृ० १६४ पं ३] चिट्ठंति।

||१२३||

[१२६] सभाए णं सुहम्माए अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव मणीहिं उवसोभिए मणिफासो य उल्लोयो य, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महेगा मणिपेढिया पण्णत्ता सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमयी जाव पडिरूवा। तीसे णं मणिपेढियाए उवरिं एत्थ णं माणवए चेइयखंभे पण्णत्ते, ५

धूपघटिकावर्णनं द्वारवत् [पृ०१६४ पं० २-३] ८०सभायां सुधर्मायां ८१ अष्टाचत्वारिंशत् ८२गोमानसिकाः-शय्यारूपाः स्थानविशेषास्तेषां सहस्राणि प्रज्ञप्तानि, ८३तद्यथा-षोडश सहस्राणि पूर्वतः षोडश सहस्राणि पश्चिमायाम् अष्टौ सहस्राणि दक्षिणतः अष्टौ सहस्राणि उत्तरतः, तास्वपि फलकवर्णनम् नागदन्तवर्णनम् सिक्कगवर्णनम् धूपघटिकावर्णनं च द्वारवत् [पृ० १७६ पं० २, पृ०१६४ पं० २-३] १०

[१२६] १ 'सभाए णं सुहम्माए' इत्यादिना भूमिभाग×वर्णनं उल्लोकवर्णनं च प्राग्वत् [पृ०८१, ९७ पं०३] २ तस्य बहुसमरमणीयस्य भूमिभागस्य ३ बहुमध्यदेशभागेऽत्र ४ महती एका मणिपीठिका प्रज्ञप्ता, ५ षोडश योजनान्यायाम-विष्कम्भाभ्याम् ६ अष्टौ योजनानि बाहल्यतः ७ सर्वरत्नमयी इत्यादि प्राग्वत् [पृ० पं०] ८ तस्याश्च मणिपीठिकाया उपरि महानेको ९ माणवकनामा चैत्य-

× -वर्णनं 'सभाए णं सुहम्माए इत्यादिना उल्लोकवर्णनं च प्रा-पा० ४-५ भा० १।

सट्ठिं[10] जोयणाइं उड्ढं उच्चत्तेणं, जोयणं[11] उव्वेहेणं, जोयणं[12] विक्खंभेणं अडयालीसंअंसिए[13] अडयालीसइ○कोडीए[14] अडयालीसइविग्गहिए[15] सेसं जहा महिंदज्झयस्स[16] [पृ० पं०] माणवगस्स[17] णं चेइयखंभस्स उवरिं बारस[18] जोयणाइं ओगाहेत्ता हेट्ठावि[19] बारस जोयणाइं वज्जेत्ता *मज्झे[20] छत्तीसाए[21] जोयणेसु एत्थ णं बहवे[22] सुवण्णरुप्पमया फलगा पण्णत्ता, तेसु णं सुवण्णरुप्पामएसु फलएसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु नागदंतेसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु[23] णं रययामएसु सिक्कएसु बहवे वइरामया[24] गोलवट्टसमुग्गया[25] पण्णत्ता, तेसु[26] णं वयरामएसु गोलवट्टसमुग्गएसु बहवे[27] जिणसकहातो[28] संनिखित्ताओ चिट्ठंति। ताओ णं सूरियाभस्स[29]

सिक्कोपरिस्थितसमुद्गकेषु देवपूज्यानि जिनसक्थीनि

५

स्तम्भः प्रज्ञप्तः, १० षष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन ११ योजनमुद्वेधेन १२ योजनं विष्कम्भेण १३ अष्टाचत्वारिंशदस्रिकः १४ 'अडयालीसइकोडीए १५ अडयालीसइविग्गहिए' इत्यादि सम्प्रदायगम्यम्। 'वइरामयवट्ट' इत्यादि १६ महेन्द्रध्वजवत् वर्णनं निरवशेषं तावद् वक्तव्यं यावत् 'सहस्सपत्तहत्थगा सव्वरयणामया जाव पडिरूवा' इति [पृ०१०९ पं०२] तस्य च १७ माणवकस्य चैत्यस्तम्भस्य उपरि १८द्वादश योजनानि ⊙अवगाह्य-उपरितनभागात् द्वादश योजनानि वर्जयित्वेति भावः, १९अधस्तादपि द्वादश योजनानि वर्जयित्वा २० मध्ये २१ षट्त्रिंशति योजनेषु २२ 'बहवे सुवण्णरुप्पामया फलगा' इत्यादि फलकवर्णनम् नागदन्तवर्णनम् सिक्ककवर्णनं च प्राग्वत् [पृ० १७६ पं० २-९] २३ तेषु च रजतमयेषु सिक्ककेषु बहवो २४ वज्रमया २५ गोलवृत्ताः-गोलवद् वृत्ताः समुद्गकाः प्रज्ञप्ताः, २६ तेषु च वज्रमयेषु समुद्गकेषु २७ बहूनि २८ जिनसक्थीनि सन्निक्षिप्तानि तिष्ठन्ति, यानि २९ सूर्याभस्य देवस्य

१०

○-कोडाकोडीए-भा० १। * मज्झे बत्तीसाए-मु० पु० पाठः, स च विवरणं नानुसरति। ⊙ अवगम्य उ-भा० १।

देवस्स अन्नेसिं च बहूणं देवाण य देवीण य अच्चणिज्जाओ जाव पज्जुवासणिज्जातो। माणवगस्स चेइयखंभस्स उवरिं अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता।

[१२७] तस्स माणवगस्स चेइयखंभस्स पुरत्थिमेणं एत्थ णं महेगा मणिपेढिया पण्णत्ता, अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणिमई अच्छा जाव पडिरूवा, तीसे णं मणिपेढियाए उवरिं एत्थ णं महेगे सीहासणे पण्णत्ते सीहासणवण्णतो सपरिवारो [पृ० ९८ पं० ३-] तस्स णं माणवगस्स चेइयखंभस्स पच्चत्थिमेणं एत्थ णं महेगा मणिपेढिया पण्णत्ता अट्ठ जोयणाइं आयामविक्खंभेणं

५ 

३० अन्येषां च बहूनां वैमानिकानां देवानां देवीनां च ३१ अर्चनीयानि चन्दनैः, वन्दनीयानि स्तुत्यादिना, पूजनीयानि पुष्पादिना, माननीयानि बहुमानतः, सत्करणीयानि वस्त्रादिना, कल्याणं मङ्गलं दैवतं चैत्यमितिबुद्ध्या ३२ पर्युपासनीयानि। ३३ 'तस्स णं चेइयखंभस्स उवरि बहवे अट्ठट्ठ मंगलगा' इत्यादि प्राग्वत् [पृ० १९ पं० ४-]

[१२७] १ तस्य माणवकस्य २ चैत्यस्तम्भस्य ३ पूर्वस्यां दिशि अत्र ४ महत्येका ५ मणिपीठिका प्रज्ञप्ता, सा च ६ अष्टौ योजनान्यायाम-विष्कम्भाभ्यां ७ चत्वारि योजनानि बाहल्येन ८ 'सव्वमणिमई' इत्यादि प्राग्वत् [पृ० १९ पं० ५] [९ ÷सिंहासनं प्रज्ञप्तम् सिंहासनवर्णनम् [पृ० ९८ पं० ३] शेषाणि च भद्रासनानि तत्परिवारभूतानि प्राग्वत् [कं० ४४]। १० तस्य माणवकनाम्नः ११ चैत्यस्तम्भस्य १२ पश्चिमायां दिशि अत्र १३ महती एका १४ मणिपीठिका प्रज्ञप्ता साऽपि १५ अष्टौ योजनानि आयाम-विष्क-

१०

÷[ ] एतच्चिह्नान्तर्गतः पाठः केवलं भा० १-२ प्रतावेव तथापि मूलानुसारित्वेन अत्र न्यस्तः।

रायपसेण-
इयं।

॥२२६॥

[16]चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमया अच्छा जाव पडिरूवा, [17]तीसे णं मणिपेढियाए उवरिं एत्थ णं [18]महेगे [19]देवसयणिज्जे पण्णत्ते, [20]तस्स णं देवसयणिज्जस्स [21]इमेयारूवे वण्णावासे पण्णत्ते, तंजहा–[22]णाणामणि-मया [23]पडिपाया [24]सोवण्णिया [25]पाया [26]णाणामणिमयाइं [27]पायसीसगाइं [28]जंबूणयामयाइं [29]गत्तगाइं [30]वइरामया [31]संधी [32]णाणामणिमए ◎[33]विच्चे [34]रययामई [35]तूली [36]लोहियक्खमया [37]बिब्बोयणा [38]तवणिज्जमया [39]गंडोवहाणया [40]से णं सयणिज्जे [41]सालिंगणवट्टिए

देवशयनी-यस्यवर्णकः

म्भाभ्यां १६ चत्वारि योजनानि बाहल्येन । 'सव्वमणिमया' इत्यादि प्राग्वत् ।] [पृ० ९८ पं० २ तथा पृ०१०२ पं० १] १७ तस्याश्च मणिपीठिकाया उपरि अत्र १८ महदेकं १९देवशयनीयं प्रज्ञप्तम्, २० तस्य च देवशयनीयस्य २१ अयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–२२नानामणिमयाः २३+प्रतिपादा–मूलपादानां प्रतिविशिष्टोपष्टम्भकरणाय पादाः प्रतिपादाः, २४ सौवर्णिकाः–सुवर्णमयाः २५ पादाः–मूलपादाः, २६ नानामणिमयानि २७ पादशीर्षकाणि २८ जाम्बूनदमयानि २९ गात्राणि–×ईषा–आदीनि ३० वज्रमया–वज्ररत्नापूरिताः ३१ सन्धयः ३२ नानामणिमयं ३३ व्यूतं–विशिष्टवानम् ३४ रजतमयी ३५ तूली ३६ लोहिताक्षमयाणि ३७ 'बिब्बोयणा' इति उपधानकानि, आह च ○जीवाभिगममूलटीकाकारः–"बिब्बोयणा–उपधानकान्युच्यन्ते" [ ] इति, ३८ तपनीयमय्यो ३९ गण्डोपधानिकाः, ४० तद् देवशयनीयं ४१ सालिङ्गनवर्तिकम्–सह आलिङ्गनवर्त्या–शरीर-

५

१०

◎ पृ०९८ पं०५ तथा १२। "वेच्चं व्यूतं वानम् इत्यर्थः"–जीवा० वृ० प्र०पृ० २१० पं०६ । 'वान' शब्दस्य पर्यायः भाषायाम् 'वाण'–'खाटलानुं वाण'–इति । + भाषायाम्–पडवाया । × भाषायाम् ईषा–'ईस–खाटलानी ईस' इति प्रसिद्धम्। ○ जीवा० वृ०पृ० २३१ पं०१४।

उभ[42]ओ बिब्बोयणं दुह[43]ओउण्णते म[44]ज्झे णयगंभीरे गंगापुलिणवालुयाउद्दा[45]लसालिसए सुविरइयरयत्ताणे उ[46]वचियखोमदुगुल्लपट्टपडिच्छायणे आईणग-रूय-बूर-णवणीय-तूलफासमउते [पृ० ९९ पं० २] रत्तं[47]सुयसंवुए सु[48]रम्मे पासादीये...पडिरूवे।

[१२८] त[1]स्स णं देवसयणिज्जस्स उत्तर[2]पुरत्थिमेणं महे[3]गा मणि[4]पेढिया पण्णत्ता, अट्ठ[5] जोयणाइं आयामविक्खं[6]भेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणि[7]मयी जाव पडिरूवा, ती[8]से णं मणिपेढियाए



---

प्रमाणेनोपधानेन यत् तत् तथा, ४२ उभयतः-उभौ-शिरोऽन्त-पादान्तावाश्रित्य बिब्बोयणम्-उपधानं यत्र तत् उभयतोबिब्बोयणं ४३ उभयतउन्नतं ४४ मध्ये नतं च तत् निम्नत्वात् गम्भीरं च-महत्त्वान्नतगम्भीरं ४५ गङ्गापुलिनवालुकाया अवदालो-विदलनं पादादिन्यासे अधोगमनमिति भावः तेन 'सालिसए' इति सदृशकम् गङ्गापुलिनवालुकावदालसदृशकं, दृश्यते चायं प्रकारो हंसतूल्यादिष्विति, तथा ४६ 'उपचित'इति विशिष्टं परिकर्मितं क्षौमं-कार्पासिकं दुकूलं-वस्त्रं तदेव पट्टः उपचितक्षौमदुकूलपट्टः स प्रतिच्छदनं-आच्छादनं यस्य तत् तथा प्राग्वत् [पृ० ९९ पं० ९] ४७ रक्तांशुकेन संवृतं रक्तांशुकसंवृतम्-अत एव ४८ सुरम्यम् 'पासादीये' इत्यादिपदचतुष्टयं प्राग्वत् [पृ० ७ पं० ५]।

[१२८] १ तस्य देवशयनीयस्य २ उत्तरपूर्वस्यां दिशि अत्र ३ महत्येका ४ मणिपीठिका प्रज्ञप्ता, सा च ५ अष्टौ योजनान्यायाम-विष्कम्भाभ्यां ६ चत्वारि योजनानि बाहल्यतः ७ 'सव्वमणिमयी' इत्यादि प्राग्वत् [पृ० १९ पं० ८] ८ तस्याश्च मणिपीठिकाया

रायपसेणइयं। ॥२२८॥

उवरिं एत्थ णं महेगे खुड्डुएं महिंदज्झए पण्णत्ते सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं जोयणं विक्खंभेणं वइरामया वट्ट-लट्ठसंठियसुसिलिट्ठ-जाव-पडिरूवा, [पृ० १०९ पं० २] उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता, तस्स णं खुड्डागमहिंदज्झयस्स पच्चत्थिमेणं एत्थ णं सूरियाभस्स देवस्स चोप्पाले नाम पहरणकोसे पन्नत्ते सव्ववइरामए अच्छे जाव पडिरूवे, तत्थ णं सूरियाभस्स देवस्स फलिहरयण-खग्ग-गया-धणुप्पमुहा बहवे पहरणरयणा संनिखित्ता चिट्ठंति, उज्जला निसिया सुतिक्खधारा पासादीया...। सभाए णं सुहम्माए उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता।

[१२९] सभाए णं सुहम्माए उत्तरपुरत्थिमेणं एत्थ णं महेगे सिद्धायतणे पण्णत्ते एगं जोयणसयं आयामेणं पन्नासं

---

९ उपरि १० क्षुल्लको महेन्द्रध्वजः प्रज्ञप्तः, तस्य प्रमाणं वर्णकश्च महेन्द्रध्वजवद् वक्तव्यम् [पृ० २२१ पं० २] ११ तस्य क्षुल्लकमहेन्द्रध्वजस्य १२ पश्चिमायामत्र १३ सूर्याभस्य देवस्य महानेकः १४ चोप्पालो नाम १५ प्रहरणकोशः-प्रहरणस्थानं प्रज्ञप्तम्, किंविशिष्टः ? इत्याह-'जाव पडिरूवे' इति प्राग्वत् [पृ० १९ पं० ८] १६ तत्र चोप्पालकाभिधाने प्रहरणकोशे बहूनि १७ परिघरत्न-१८ खड्ग-१९ गदा-२० धनुःप्रमुखादीनि २१ प्रहरणरत्नानि २२ सन्निक्षिप्तानि तिष्ठन्ति, कथंभूतानि ? इत्यत आह-२३ उज्ज्वलानि-निर्मलानि २४ निशितानि-अतितेजितानि अत एव २५ तीक्ष्णधाराणि प्रासादीयानि इत्यादि प्राग्वत् [पृ० ७ पं० ५] तस्याश्च २६ सभायाः सुधर्माया उपरि बहूनि २७ अष्टावष्टौ मङ्गलकानि-इत्यादि सर्वं प्राग्वत् [पृ० १९ पं० ४] वक्तव्यम्।

[१२९] १ सभायाः सुधर्मायाः २ उत्तरपूर्वस्यां दिशि ३ महदेकं ४ सिद्धायतनं प्रज्ञप्तम्, ५ एकं योजनशतमायामतः ६ पञ्चा-

सूर्याभस्य प्रहरणकोशः

५

१०

